गम्भीरपरिखया समग्रैश्वर्यनिकेतनमतिविस्तीर्णमवनिवनिताशिरस्तिलकभूतं विजयपुरं नाम नगरं, तत्र चाराध्यः पार्थिवसहस्राणां प्रथमः सत्त्ववतां अग्रेसरो विक्रमिणां पात्रं समग्रसम्पदां जलधिर्नुद्धिसरितां विहितबहुविस्मयो महामन्त्रिणां कमनीयताहितकामविभ्रमः कामिनीनां महाकरिकुम्भस्थलास्फालनकठिनकरकेशाकृष्टरिपुरामाऽनवरतकृतकेलिः प्रबलपरबलाचलनिचयनिर्दलनदम्भोलिश्चन्द्रमौलिनाम महानरेन्द्रः, तस्य च समस्तदिग्विलयविस्तारिकीर्तिकामिनीकमनीयप्रियाप्तुराज्ञुः दण्डमात्रप्रसाधितानेकभूभर्त्तुः सकलभूपालाभिलषणीयनयाद्यैश्वर्यप्राज्यं विपुलं राज्यं परिपालयतः कदाचित् सुभटकोटिनिरन्तरास्थानसभालंकारिमहारत्नविष्टरोपविष्टस्य पूर्वदिग्वधूवदनकमलमुद्योतितं झगित्येव समुद्गतानेकरतिमण्डलातिशायिना प्रवरतेजःपुञ्जेन समाश्वासितमशेषमप्यास्थानमकस्मात् समन्ततः शनैः शनैः प्रवृत्तसुरभिशिशिरपवनपटलेन उत्कर्णितं समग्रमपि नगरमतर्कितातुच्छोच्छलितकलकंठकिन्नरगणोद्गीयमानमधुरगेयध्वनिभिः क्षणात् समागतमवलोकनीयतां गगनमण्डलममरसुंदरीचरणरणन्नूपुररवोन्मिश्रमणिघर्घरीझात्कारैः व्याप्तमपरिशेषमपि दिक्चक्रमतिरभसभरपठद्बन्दिकोलाहलेन बधिरितमाश्वेव भूवलयमास्फालितातितुमुलसुरदुन्दुभिरवेण, ततो राज्ञा सहसैव किंचिदासनादुच्छ्रस्य निःशेषभूपालमण्डलीमण्डितास्थानजनराहित एव विस्मयभरं सहर्षं सोत्कण्ठं किंचिद्भालतलाबाह्यमुखविनिवेशितवामैककरतलकमलदलपटलकोमलमसूरकोपरिदक्षिणभुजकरतलकृतावष्टम्भो निश्चलीकृतदत्तकर्णयुगलो विस्फारिताचललोचनश्च अहो किमेतदिति यावच्चिरमवलोकयति तावल्ललाटपट्टतटघटितश्रीखण्डतिलका करकलितस्फुरत्कनकदण्डा पीनपयोधरपीठलुठन्निर्मलामलकस्थूलमुक्ताफलहारिहारिणी प्रतिहारी प्रविश्य प्रणम्य च विज्ञापयति सहर्षं, तिष्ठति प्रतीहारभूमौ देव! नियुक्तः पूर्वदिगुद्यानपा-

लक्षः तस्य कः समादेशः ?, प्रवेश्यतां सत्वरम्, अतस्तथैव कृते विनयेन प्रणम्य शिरोन्यस्तकरकुड्मलोऽवादीत् सहर्षोऽसौ- अभिनन्द्यते देवः प्रचुरसुरनरखचरनिवहानुगतस्य पवित्रीकृतपूर्वदिगुद्यानभूभागस्य सुगृहीतनामधेयस्य भुवनभानुनाम्नः केवलिनः समागमेन, ततः समाकर्णिततद्वचनो भूपालः सिक्त इव पीयूषवर्षेण विलिप्त इवाकस्मात् सरसमलयजरसेन समालिङ्गित इवानुरक्तत्रिभुवनश्रिया अवगाढ इव रतिसागरे क्षणमनुन्मिषितलोचनोऽनाख्येयं किमप्यनुभूय सुखं ददौ तस्मै पारितोषिकं भूरिदानं, भ्रूक्षेपमात्रप्रगुणीकृतसमग्रसामग्रीकश्च समारूढः कैलाशशैलानुकारिमहाकरिवरस्कन्धं प्रतिहतसूरप्रतापः सुरविसरमथ्यमानक्षीरनीरधिडिण्डीरपिण्डपाण्डुरमहापुण्डरीकेण वीज्यमानमूर्त्तिः शरच्चन्द्रचारुचामरनिचयेन वेष्टितः करिघटाभिः परिकरितस्तुरङ्गमसमूहैः परिवारितो रत्ननिर्मितरथनिकरैः शोभितः सुभटकोटिभिः प्राप्तः क्रमेण पूर्वदिगुद्यानम्, आगतश्च भगवतः केवलिनो लोचनगोचरं, दूरादवतीर्णः करिवरात् ततोऽतिहृष्टः परित्यज्य पुण्डरीकं विमुच्य मस्तकान् मुकुटं संत्यज्य ताम्बूलं अपहाय हेतिसंसर्गं विक्षिप्य रत्नपादुके जलक्षालनकृतकरचरणवदनविशुद्धिर्विनयनम्रमूर्द्धा मीलितकरकुड्मलः कृतैकाग्रनयनमनाः प्रविश्य विद्याधरामरसुरनिरन्तरां सभां महाकनककमलोपविष्टं भगवन्तं केवलिनं भक्तिभरनिर्भरस्त्रिः प्रदक्षिणीकृत्य प्रणम्य संस्तुत्य च समुपविष्टः समुचितप्रदेशे। योजितकरयुग्मः सविनयमवादीद्–भगवन्! अनुगृहीता वयमतर्कितरोरमन्दिररत्नवृष्टिकल्पेन निजागमनेन, आसीच्च स्वामिन्! मम कौमार्ये कोऽपि कियाँश्च मुनिसंसर्गः, केवलं बालबुद्धिभिस्तदाऽनवगततथाविधपरमार्थैर्न किञ्चिदनुष्ठितमात्महितं, संस्कारमात्रमेव किञ्चित्तैराहितं, पश्चाच्च राज्यभारनिर्भरतमःपटलविलुप्तसंस्कारणामपि विषयमूर्च्छितमनसां सर्वथैवासंजातसाधुदर्शनानामतिक्रान्त एतावान् कालः, ततोऽ-

नन्तरातीततमीविरामसमये विनिद्रेण कथमपि चिन्तितं मया–अहो अपरिमितमहारम्भकोटीकृतप्रचुरपापसंचयस्य तत्प्रकोपकाले भवान्तरमापन्नस्य मम कः शरणं भविष्यतीति पृच्छामि कञ्चिन्मुनिं यदि क्वचित् पश्यामि, केवलं पूर्वमवाप्तमुनिसंसर्गप्रवणपोतपरिभ्रष्टानां संसारमहार्णवमध्यमग्नानां महापापकर्म्मणामस्मादृशां दुर्घटमेतदिति सखेद एवातिवाह्य रजनिशेषं विधाय गोसर्गकृत्यं यावदास्थानसभायामुपविष्टस्तिष्ठामि तावन्महासरसीव मरुपथिकेन ग्रीष्मवृष्टिरिव चातककुटुम्बेन सहकारतरुपंक्तिरिव प्रचण्डचण्डांशुकरनिकरोपतप्तेन पीयूषपूरितकूपिकेव महारोगोपद्रुतेन कुतोऽपि पुण्योदयात् समुपलब्धा मयाऽपि युष्मदागमनवार्त्ता, तच्छ्रवणानन्तरमेव च महाऽऽहवहेतिनिवहोपहन्यमानमहाकातर इव शरण्यसुभटपृष्ठिं हर्षभरनिर्भरः प्राप्तोऽहं युष्मच्चरणद्वयीं, ततो विधाय मयि प्रसादं कृत्वा च कारुण्यं कथ्यतां किं तत्र मम शरणं भविष्यतीति, ततो दशनदीधितिनिर्दलिततमःपटलो मुनीन्द्रः प्राह–महाराज ! तत् तत्र तव शरणं भविष्यति यत् प्रतिपन्नमन्यैरपि भवादृशैः, विशेषतस्त्वस्माभिरपि, एतदाकर्ण्य राजा सविस्मयमीषद्विहस्यावोचद्–भगवन् ! भवतामपि जगदेकशरणानामन्यः कोऽपि शरणमिति महदाश्चर्यमिति निवेद्यतां कोऽयं व्यतिकरः ?, ततो मुनीश्वरः प्राह–महाराज ! महतीयं कथा सव्याक्षेपाश्च भवन्तस्तत् किमत्र निवेद्यते ?, महीपतिराह–मैवमादिशन्तु भगवन्तो, न हि मन्दोऽपि पीयूषपानमासादयन्नुत्सुको भवति विषपानाय, यस्य तु शिखण्डिन इव मेघागमो मम समवलोकयत एवागता यूयं कस्तस्यान्यो व्याक्षेपः ?, ततो निर्विकल्पं प्रीणयन्तु पूज्याः सुचिरमपि मदीयश्रवणयुगमिदं स्ववचनामृतप्रक्षेपेण, ततो जगाद ज्ञानी, श्रूयतां तर्ह्यवहितेन चेतसा, कथयामः किंचिदेतदिति–अस्तीह ननु लोकस्य, निवासः सर्वसम्पदाम् । निकेतनं समस्तैश्च, न निर्मुक्तं नरोत्तमैः ॥ १ ॥ परावरविभागेन,

निर्मुक्तं शाश्वतं महत् । पुरं लोकोदरं नाम, समस्ताश्चर्यमन्दिरम् ॥२॥ नासौ वर्णो न सा जातिर्न तद् गोत्रं न तत् कुलम् । न तत् पुण्यं न तच्छल्यं, न सा विद्या न तद्धनम् ॥ ३ ॥ न तद् रत्नं न सा नीतिर्न स धर्मो न कर्म तत् । विलासाचारनेपथ्यं, व्यवहारक्रिया न सा ॥४॥ नाटकं च न तत् क्वापि, यत्तत्र न समीक्ष्यते । किं चात्र कथ्यतेऽस्माभिः ?, पुरं सर्वमयं हि तत् ॥ ५ ॥ सदाऽत्र कटके द्वे च, धर्मपापात्मके स्थिते । अनन्ते बाढमन्योऽन्यं, विरुद्धे च महाबले ॥६॥ नेताऽत्र पापसैन्यस्य, वशीकृतजगत्त्रयः । अहितः सर्वभूतानां, मोहराजो महीपतिः ॥ ७ ॥ तथाहि—शक्रानप्यसौ वर्त्तयति निजाज्ञायां चक्रिणोऽपि प्रवर्त्तयति स्वनिर्देशे किङ्करयति समस्तराजकं दासतां नयति अमात्यश्रेष्ठिसार्थवाहादिप्राकृतजनान्, ततो जनयति अदेवेष्वपि देवबुद्धिं अगुरुष्वपि गुरुमतिं अतत्त्वेष्वपि तत्त्वाध्यवसायं, कारयत्यवस्तुषु महाप्रतिबन्धं त्याजयति सर्वथैव सत्कृत्यपक्षं प्रवर्त्तयति महापापक्रियासु कारयति हिंसां जल्पयत्यलीकानि ग्राहयत्यदत्तानि सेवयति परकलत्राणि आसञ्जयति महारम्भपरिग्रहेषु जनयति महागृद्धिं रात्रिभुक्तेषु क्षिपति क्रोधमहाज्वलने अवष्टम्भयति मानशैलनिचयेन दंशयति दुष्टमायाभुजङ्गीमुखेन पातयति लोभमहासागरे बध्नाति पुत्रादिप्रेमबन्धपाशैः नियन्त्रयति कलत्राद्यनुरागनिगडैः, ततः पातयति समृद्धिभ्यो जनयत्यमाहात्म्यं उत्पादयति दीनतां सम्पादयति शोच्यतां नयति दुर्गतिं क्षिपति महानरकेष्वपि नयति तिर्यक्षु प्रापयति कुमानुषेषु, विडम्बयति तत्र दारिद्र्यदौर्भाग्यपरिभवादिविडम्बनाभिः प्रवर्त्तयति पापक्रियासु पुनर्गमयति नरकादिष्विति,—इत्येवं भ्रमयत्येष, प्राणिनो भवसागरे । दुःखौघपीडितांस्तेन, तेषामहित उच्यते ॥१॥ कोपाहङ्कारलोभाद्यैरनन्तं कटकं च तत् । तस्याज्ञाकारिभूतानां, तद्ददेवाहितं सदा ॥२॥ राजा चारित्रधर्माख्यो, धर्मसैन्यस्य नायकः । सम्य-

ग्दर्शनसद्बोधैः, सदागमशमार्जवैः ॥१॥ गाम्भीर्यमार्दवौदार्यसत्यशौचदमादिभिः । अनन्तसुभटैर्युक्तो, जीवानां हित एव सः ॥२॥ तथाहि—जनयत्यसौ देवेष्वेव देवबुद्धिं गुरुष्वेव गुरुमतिं तत्त्वेष्वेव तत्त्वरुचिं, त्याजयत्यवस्तुषु प्रतिबन्धं प्रवर्त्तयति सत्क्रियासु रक्षयत्यात्मवत् सर्वभूतग्रामं परिहारयत्यनृतं निवारयति स्तेयं निषेधयत्यब्रह्म शिथिलयत्यारम्भपरिग्रहाग्रहबुद्धिं नियमयति रात्रिभोजनं भूषयति प्रशमेन मण्डयति मार्दवेन समलङ्करोत्यार्जवेन तर्प्पयति सन्तोषेण मोचयति निविडस्नेहबन्धनात् दलयत्यनुरागनिगडानि, इहाप्यारोपयति महासमृद्धिं जनयति गुरुतां स्थगयति समस्तलघुतां सम्पादयति सर्वजनश्लाघ्यतां, नयति सुगतिं निरुणद्धि नरकतिर्यग्गती उत्पादयति महर्द्धिकदेवेषु, उपलम्भयति बोधिं सुस्थीकरोति राज्यैश्वर्यसौभाग्यादेयत्वपूज्यत्वादिभिः प्रवर्त्तयति सद्धर्मक्रियासु पुनर्नयति महर्द्धिकदेवेषु—इत्येवं सुखयत्येष, भववासेऽपि देहिनः । पर्यन्ते प्रापयेन्मोक्षं, हितस्तेषामयं ततः ॥ १ ॥ इत्येवं द्वे इमे सैन्ये, सदैवावस्थिते तयोः । प्राणिनां सुखदुःखार्थे, रणं नैव निवर्त्तते ॥ २ ॥ कालोऽनन्तस्त्वतिक्रान्त, एतयोर्युद्ध्यमानयोः । जयः पराजयश्चेह, कदाचित् कस्यचिन्मतः ॥ ३ ॥ गरीयान् येन तेभ्योऽपि, त्रैलोक्यस्यापि नायकः । राजा कर्मपरिणामनामाऽस्तीह महर्द्धिकः ॥४॥ शुभाशुभादिरूपेण, विचित्रोऽसौ निगद्यते । अलक्ष्यः स्थूलबुद्धीनां, समक्षो योगिनां मतः ॥ ५ ॥ भ्राताऽसौ मोहराजस्य, ज्येष्ठो लोकस्थितेर्लघुः । भर्त्ता कालपरिणत्याः, समर्थो नाटकप्रियः ॥ ६ ॥ देवानप्यसौ गर्दभयति गर्दभानप्यमरयति तिरश्चोऽपि नारकयति नारकानपि तिरयति द्विरदानपि कीटयति कीटानपि द्विरदयति चक्रिणोऽपि रङ्कयति रङ्कानपि नरेन्द्रयति ईश्वरानपि निःस्वयति निःस्वानपि क्षणादीश्वरयति निरुजोऽपि सद्यः सरोगयति सरोगानपि प्रगुणयति सशोकानपि निःशोकयति निःशोकानपि सशोक-

यति सुखिनोऽपि दुःखयति दुःखितानपि सुखयति । समर्थ एष इत्येवं, चित्ररूपश्च कीर्त्तितः । असंख्यैर्नारकैः पात्रैर्देवमानवसम्भवैः ॥ १ ॥ तिर्यक्पात्रैरनन्तैस्तु, मोहराजेन सूचितम् । नाटकं नर्त्तयन्नेष उल्लसत्येव तत्प्रियः ॥ २ ॥ चारित्रधर्मपक्षेऽप्यसौ, शुभरूपः प्रवर्त्तते । अन्यदा मोहराजस्य, पक्षं पोषयते सदा ॥३॥ यत्रासौ वर्त्तते पक्षे, जयस्तस्यैव निश्चितः । पराजयोऽन्यपक्षस्य, तत् साधारणता मता ॥ ४ ॥ सैन्यद्वयेऽपि विज्ञाय, रुष्टो मोहनराधिपः । अन्यदा तं प्रभाणैवं, यथा तव सदा वयम् ॥ ५ ॥ हितं कुर्मः प्रियं ब्रूमो, वर्त्तयामो भवत्प्रियम् । नाटकं प्रयता एतन्नित्यमेते तु वैरिणः ॥६॥ सदागमाद्यास्त्वत्क्लृप्तं, कुर्वते नित्यमेव हि । आकृष्य येन पात्राणि, निर्वृतौ प्रक्षिपन्ति ते ॥७॥ तथापि पक्षमेतेषामाश्रित्यैते वयं सदा । निष्पिष्टाः सर्वतोऽनेन, न विद्मः केन हेतुना ? ॥ ८ ॥ चेष्टां हि को विजानाति, तवेमां चित्ररूपिणीम् ? । ततो विहस्य शीर्षे च, चुम्बित्वाऽऽलिङ्ग्य चादरात् ॥ ९ ॥ कर्मसंचयभूपालः, साश्रुनेत्रोऽब्रवीदमुम् । वत्स ! जानामि तच्चेष्टां, यत्त्वं ब्रूषे तथैव तत् ॥१०॥ निर्मूलघातकं मूढं, रमन्ते ते ममापि हि । तथापि किं करोम्यत्र, दाक्षिण्यमिदमीदृशम् ? ॥११॥ अनन्तकालादायातमेतेऽपि सर्वं मम । कथंचित् करोमि किंचिदाराच्चेषामपि प्रियम् ॥१२॥ यूयमेव पुनश्चित्ते, सदैवावस्थिता मम । तद् ब्रूहि यत् प्रियं वत्स !, तव सम्पादयाम्यहम् ॥१३॥ आह मोहनृपस्तर्हि, निजाव्ययपुरान्मम । सहायान् देहि संसारिजीवाँस्तानेव यैरयम् ॥१४॥ निर्मूल्यते समयोऽपि, शत्रुपक्षो सुखावहः । ततः कर्मनृपेणाप्यसंव्यवहार्यपत्तनात् ॥ १५ ॥ दूरभव्या अभव्याश्च, दत्तास्तस्य सहायिनः । मोहराजस्ततः सार्द्धं, तैः सर्वत्र विजृम्भते ॥ १६ ॥ सैन्ये चारित्रधर्मस्य, वार्त्तेषा प्रहिता ततः । जातं सर्वं निरानन्दं, निरुत्साहं गतक्रियम् ॥ १७ ॥ दृष्ट्वैतत्तादृशं मन्त्री, सद्बोधः प्राह भूपतिम् । किमेवं स्थीयते देव !, निश्चेष्टैः

सत्त्ववर्जितैः ? ॥१८॥ आपत्सूपाय एवेह, महद्भिश्चिन्त्यते सदा । पादप्रसारिका स्त्रीणां, कातराणां च शोभते ॥ १९ ॥ निरुपायो हि यस्तिष्ठेत्, प्रदीप्ते वह्निना गृहे । सर्वस्वदाहं संत्यज्य, तस्यान्यत्किं प्रजायते ? ॥ २० ॥ ग्रस्तोऽपि तमसा सूरः, किं विमुंचति विक्रमम् ? । ग्रस्तशेपस्तथैवासौ, किं न द्योतयते जगत् ? ॥२१॥ ततोऽवलम्ब्य वीरत्वमुपायश्चिन्त्यतामिह । राजा तमाह सर्वेऽपि, त्वय्युपाया व्यवस्थिताः ॥ २२ ॥ यद्वत्स ! त्वं वदस्यत्र, तत् कुर्मः केवलं वयम् । प्रणम्य स्वामिनं प्राह, सद्बोधो विनयान्वितः ॥ २२ ॥ कर्मपरिणामपार्श्वे, गच्छामस्तर्हि सत्वरम् । दग्धानां वह्निना यस्माद्, वह्निरेव सदौपधम् ॥२३॥ न च शत्रुरिति ज्ञात्वा, नानुवृत्तिर्विधीयते । सर्वस्वं येन निर्दग्धं, सोऽपि ह्यग्निरुपास्यते ॥२४॥ तत्पक्षं च शुभं सर्वं, पोपयामो वयं सदा । पर्यन्ते ( सहते ) स्म कृतं तेन, सर्वनाशं स आत्मनः ॥ २५ ॥ ज्ञात्वाऽप्यस्मदनुवृत्तिं, काश्चिदेव करिष्यति । न चैकान्तेन दुष्टोऽयं, वत्स ! मोहादिवत् सदा ॥ २६ ॥ इत्यादिसद्बोधोक्तेन, पुरस्कृत्य तमेव सः । चारित्रधर्मस्तस्यान्ते, गतः स्वल्पपरिच्छदः ॥२७॥ कर्मसंचयभूपालः, सद्बोधेनोदितस्ततः । वेलामेतावतीं यावद्, युष्माभिस्तावदीदृशी ॥ २८ ॥ न कृतैवैकपक्षेण, वृत्तिर्यूयं समास्ततः । इदानीं मा कुरुध्वं न, उपेक्षां पाल्यतां स्थितिम् ॥ २९ ॥ चिरं स्थित्वा ततस्तूष्णीं, विमृश्यैप महीपतिः । तत एव पुरादेकं, समानीय सहायकम् ॥ ३० ॥ सद्बोधस्योपदेश्यैवमुवाच श्रवणे शनैः । एको युष्माकमप्येपः, सहायः प्रकटः क्रमात् ॥३१॥ भविष्यत्यधुना तस्य, तेऽद्यापि प्रतिपन्थिनः । अनुवर्त्या ममाप्येते, कुटुम्बविघटाऽन्यथा ॥३२॥ इत्याकर्ण्य ततो धर्म्मः, सद्बोधेन समं गतः । स्वस्थाने पृष्टवांश्चैनं, किं तेन कृतमीदृशम् ? ॥ ३३ ॥ प्रभूतान् मोहराजाय, सहायान् दत्तवान् यतः । अनन्तांशेन मोहस्य, वयं सम्भाविताः सदा ॥ ३४ ॥ एकोऽहं

शत्रवो नैके, तदप्यत्र न कारणम् । सूरो हि दलयत्येकस्तमांसि प्रचुराण्यपि ॥ ३५ ॥ तद्दर्शनं च कालेन, भूयसेत्यप्यखेदकृत् । यस्माद्बुभुक्षितस्यार्त्या, पाकं नायात्युदुम्बरः ॥ ३६ ॥ धीरा भवत तद् यूयं, देव ! यस्माद्भविष्यति । क्रमात् सुस्थमिदं सर्वं, कालेनाशुभहानितः ॥ ३७ ॥ अत्रान्तरे सर्वमेतदत्यन्तावहितमानसः श्रुत्वा चन्द्रमौलिभूपालः सहर्षं चेतस्यचिन्तयद्–अहो साधु सद्बोधमन्त्रिन् ! साधु, यथार्थनामैवासौ, क एवमन्यो वक्तुमपि जानाति ?, अत एव सर्वथाप्यनुगृहीता वयमनेन साश्चर्यमुनीन्द्राख्यानककथनेनेत्यादि (विचिन्त्य) निमीलितलोचनः क्षणं परमानन्दमनुभूय प्राह–भगवँस्ततः तस्य चारित्रधर्मदत्तसहायस्य पुरतः किं जातमित्युत्सुकाः तद्व्यतिकरश्रवणे वयमिति विधायास्मासु प्रसादं तदितो निवेद्यतां, ज्ञानी प्राह–समाकर्णयतु महाराज ! ततः परिणामनृपेणासंव्यवहारनगरात् समानीय मुक्तोऽसौ व्यवहारनिगोदेषु, स्थितश्चात्मना तत्समीप एव कृतप्रच्छन्नरूपः, ततो ज्ञातोऽयं व्यतिकरो मोहादिभिः, चिन्तितं च–अहो अस्मदीयनायको नारद इव कलेः कीलक इव गार्याः लोलेव घण्टाया मणिरिव डमरुकस्य मृदङ्ग इव मातङ्गस्य सदैवोभयपक्षगामी, पुनः पुनराख्यायमानमपि न किंचिन्निकेतयसौ, भृतवटस्येव सर्वं पार्श्वत एव व्रजति, सत्यीकृतं चानेन–स्वभावो नोपदेशेन, शक्यते कर्तुमन्यथा । सुतप्तान्यपि तोयानि, पुनर्गच्छन्ति शीतताम् ॥१॥ भवतु, तथापि स्वभुजबलेनैव कालोचितमनुतिष्ठाम इति संचिन्त्य समायाताश्चारित्रधर्मसैन्यभविष्यत्सहायभूतस्य संसारिजीवस्य समीपे प्रकुपिता मोहादयो, विधृतश्चायं तेष्वेव व्यवहारनिगोदेषु विचित्रानन्तदुःखकोटीरनुभवन्ननन्तोत्सर्पिण्यवसर्पिणीः, ततः कदाचित्तेषु किञ्चित् कथमपि अविरलीभूतेषु मोहादिष्वन्तरमुपलभ्यानीतः कर्मपरिणामेनासौ निगोदजीवः पृथिवीकायिकेषु, तत्रापि दुःखलक्षाण्युपदर्शयद्भिः स्खलितः सरोपैर्मोहादिभि-

रसंख्येयोत्सर्पिण्यवसर्पिणीः, ततश्चान्तरं किंचिदुपलभ्य नीतोऽयं कर्मपरिणामेनाप्कायिकेषु, तेभ्योऽपि तेजःकायिकेषु, एते-भ्योऽपि वायुषु, स्खलितश्चैतेष्वपि प्रत्येकं मोहादिप्रतिपन्थिभिः प्रकुपितैर्नानादुःखोपदर्शनपूर्वमसंख्येया उत्सर्पिण्यवसर्पिणीः, ततो निरुद्धः सप्ततिसागरोपमकोटाकोटीर्यावत् प्रत्येकतरुषु, इह चान्तराऽन्तराऽतिप्रकुपितैस्तैर्दुष्टैर्मोहादिभिरसौ वराकः संसा-रिजीवः पुनः पराङ्मुखो व्यावृत्त्य व्यवहारनिगोदेषु नीत्वा तथैव प्रत्येकमनन्तादिरूपं कालं स्खलितस्तावद्यावदेतेष्वेवैकेन्द्रि-येषु पुनः पुनः भ्रमयद्भिर्निरुध्य विधृतोऽसंख्येयान् पुद्गलपरावर्त्तानिति, ततः एतावतः कालात् काञ्चिद्विचालिकामुपलभ्य नीतोऽसौ कर्मपरिमाणेन विकलेन्द्रियेषु, ज्ञात्वा चैतद् धाविताः पृष्ठतो मोहादयः, स्खलितश्चैतैरसौ तत्रापि संख्येयानि वर्षसह-स्राणि, प्रकुपितैश्च पुनरपि नीतः पराङ्मुखः, क्षिप्तः पूर्वोक्तनिगोदाद्येकेन्द्रियेषु च, पुनरुक्तं भ्रमयद्भिर्निरुध्य विधृतोऽसौ तथै-वासंख्येयपुद्गलपरावर्त्तानिति, पुनरागतः कदाचिद्विकलेन्द्रियेषु, पुनः संख्येयकालं तेषु धृत्वा तथैव व्यावृत्त्य पराङ्मुखः क्षिप्त एकेन्द्रियेषु, धृतोऽसंख्येयपुद्गलपरावर्त्तान्, एवं विकलेन्द्रियैकेन्द्रियेषु गतागतैरनन्तान् पुद्गलपरावर्त्तान्निरुद्धोऽतिदुःखितः, कदा-चिच्च कस्मिंश्चिदन्तरे कथमपि नीतः कर्मपरिणामेनासौ सम्मूर्च्छजपञ्चेन्द्रियेषु, तत्रापि धावित्वा प्राप्तैर्मोहादिभिरष्टसु भवेषु पूर्व-कोटीपृथक्त्वं यावन्निरुध्यमानः कथंचित् पुरतो रिपुसैन्यं समासन्नीभविष्यतीति भीतैः पुनरपि व्यावर्त्तितः पराङ्मुखः, क्षिप्तः पूर्वाभिहितैकेन्द्रियेषु, ततस्तथैव तेषु विकलेन्द्रियेषु सम्मूर्च्छजपञ्चेन्द्रियेषु च गतागतैः पुनरपि निरुद्धोऽनन्तान् पुद्गलपरावर्त्तान्, ततोऽन्यदा कथमप्यानीतः कर्म्मभूपेन गर्भजपञ्चेन्द्रियतिर्यक्षु, तत्रापि त्वरितमागतैर्मोहादिभिरष्टसु भवेषु पूर्वकोटीपृथक्त्वं विधृत्य प्रबलोज्ज्वलितकोपैः पुनर्नीतः पराङ्मुखः, पुनरप्येकेन्द्रियादिषु गर्भजपञ्चेन्द्रियतिर्यक्पर्यन्तेषु जन्तुषु गतागतैर्निरुद्ध-

स्तथैवानन्तान् पुद्गलपरावर्त्तान्, अन्यदा च पञ्चेन्द्रियतिर्यक्षु मत्स्यादिभवमागतममुं संवीक्ष्य चिन्तितं मोहादिभिः–अहो न न्यासत्येष कर्म्मपरिणामोऽमुमग्रतोऽग्रतश्च संचारयन्, दर्शयति च कदाचिद्रिपुपक्षमपीति प्रकुपितैः प्रवर्त्तितोऽसौ महापापेषु कारितोऽनवरतजीवघातं प्रेरितः केवलमांसभक्षणेषु, ततः पातितो महानरकेषु, धृतस्तत्रानन्तदुःखान्यनुभवन्नसंख्येयं कालम्, अन्यदा च ततः समाकृष्यानीतोऽसौ कर्मभूपेन सकुन्तादिषु, ततो रुष्टैर्मोहादिभिः पुनर्नीतोऽयं पश्चान्मुखः, तथैव चैकेन्द्रियादिषु नरकावसानेषु स्थानेषु गतागतैर्निरुद्धोऽनन्तान् पुद्गलपरावर्त्तान्, अन्यदा च कुतश्चित् कथमप्यानीतोऽसौ कर्मनृपेण सम्मूर्च्छजमनुष्येषु, तत्रापि सत्वरमागत्य मोहादिभिरष्टसु भवेष्वष्टावेवान्तर्मुहूर्त्तानि धृत्वा शीघ्रमेव पश्चान्मुखो व्यावर्त्तितः, ततः पुनरप्येकेन्द्रियादिषु सम्मूर्च्छजमनुजपर्यन्तेषु गतागतैर्धृतोऽनन्तपुद्गलपरावर्त्तान्, ततोऽन्यदा कथमपि कर्मपरिणामेनानीतोऽयमनार्यदेशोद्भवगर्भजमनुष्येषु, ततश्चकितो मोहः, क्षोभमुपागताः सर्वेऽपि तत्सैनिकाः, अहो हता वयं दूरमानीतोऽसौ वैरी, ततो रसगृद्ध्यकार्यप्रवृत्तिनामिकाभ्यां योषिद्भ्यामुत्थाय प्रोक्तं–कोऽयं नाम भवतां क्षोभः ?, अयं हि वराकोऽत्र स्थितोऽस्माकमपि माध्यो, भणत येन गले बद्ध्वा युष्मद्दासतां नीत्वा पश्चान्मुखोऽचिरेणैव व्यावर्त्यते, अहो अस्मद्बले स्त्रीणामप्येतावान् अवष्टम्भ इति रञ्जितेनोक्तं मोहभूपेन–वत्सिके ! गच्छतं तत्र शीघ्रं युवां, कुरुतमेवमेव, सिद्धिर्भवतु भवत्योः कार्येषु, वयमपि ससैन्याः करिष्यामो युष्मत्प्रतिग्राहणमिति, सावष्टम्भतया व्यवहरणीयमिति श्रुत्वैतद्वर्त्तेते, प्रवर्त्तितोऽसौ रसगृद्ध्या मद्यमांसाद्यपेयपानाभक्ष्यभक्षणेषु अकार्यप्रवृत्त्या च प्रेरितो मातृस्वस्राद्यगम्यगमनेषु, ततः पातितोऽचिरादेव महानरकेष्वित्येवं पुनरपि पराङ्मुखो नीत्वा मत्स्यैकेन्द्रियादिस्थानेषु निरुद्धोऽनन्तपुद्गलपरावर्त्तान्, अन्यदा च कथमपि नीतोऽयमार्यदेशोद्भवमातङ्गेषु, तेभ्योऽप्यभक्ष्यभक्ष-

णादिभिर्नरकपातादिक्रमेण रसगृद्ध्यकार्यप्रवृत्तिभ्यामेव व्यावृत्त्य विधृतोऽनन्तपुद्गलपरावर्त्तान्, तत आर्यदेशेष्वपि वेश्यादिकुलोत्पन्नस्ताभ्यामेव प्रभूतवारा व्यावृत्त्य विधृतस्तावन्तमेव कालं, कदाचिच्च क्षेत्रजातिविशुद्धं मानुपत्वं प्रापितस्य मोहनृपेण प्रेपितौ दर्शनावरणनामकर्म्मसामन्तौ, ताभ्यां च क्वचिज्जात्यन्धः पापाणखण्डकेभ्यो विरूपः सर्वथा शोचनीयः कृत्वा वृथासम्पादितमनुष्यभावो लीलयैव व्यावृत्त्यैकेन्द्रियादिपु निरुद्धस्तावन्तमेव कालं, कदाचित् पुनरपि कर्मपरिणामनराधिपेन समानीतो मनुष्यभावं, ताभ्यामेव दर्शनावरणनामकर्मसामन्ताभ्यां जातिबधिरः काष्ठकल्पो विरूपः कृत्वा व्यावर्त्तितस्तथैव विधृतस्तु, कदाचित्तु मूकः, शेपं तथैव, एवं कुब्जः काणः खञ्जोट इत्यादिभावैरतिबीभत्सो विरूपः कृत्वा लीलयैव दासीवद्वशीकृतोऽनन्तवारान् व्यावृत्त्य प्रत्येकमनन्तपुद्गलपरावर्त्तान्निरुद्धः, कदाचित्तु कष्टात् कर्म्मपरिणामेन पुनरपि मनुजभावमानीतो मोहमहीपतिप्रेपितेनासातावेदनीयदुष्टचरटेन क्वचिदाजन्मत एव कृतो महाकुष्ठी क्वचित् प्लीही जगृहवान् वातकी कृच्छ्री महोदरी ज्वरी अतीसारकी कासी श्वासी भगन्दरी गुल्मी रक्तपित्ती अर्शोविकारी शिरोरोगी कपालरोगी कण्ठताल्वुजिह्वादशनौष्ठकपोलास्यरोगी हृदयशूली कुक्षिशूली पृष्ठिशूली आमदोपी प्रमेही अरोचकी उरःक्षती क्वचित् क्षयादिरोगी क्षीणदेहः सदैवातुच्छोच्छलत्तीव्रवेदनासंघातः क्रन्दन् परिदेवमानः शोचन् विलपन् यथादर्शमेव परिचितापरिचिताविज्ञवित्तसमस्तजनेभ्यो निवेदयन् दीनो भक्षयन् मूलजालानि पिबन् तीक्ष्णकटुककाथान् कुर्वन्नत्युग्रचूर्णशतान्यनार्यजनोपदेशात् स्वमतिकल्पनातो वाऽतिशरीरार्थितया भक्षयन्नभक्ष्याणि पिबन् अपेयानि कुर्वन् अकार्याणि प्रवर्त्तयन् मन्त्रतन्त्रबलिविधानादिप्रयोगेपु महासावद्यानि समुचितमहापापभरोऽनन्तवाराहारितमनुजभवो व्यावृत्त्य विधृत एकेन्द्रियादिपु प्रतिवेलमनन्तपुद्गलपरावर्त्ता-

निति, अन्यदा पुनः ग्रामे कथमपि मनुजत्वे मोहनृपतिनिरूपितपापमहादण्डाधिपाज्ञया जातः क्वचिदाखेटिकः क्वचिद्वागुरिकः क्वापि सौकरिकः क्वचित् लुब्धकः क्वापि केवलमांसाशनव्यसनी क्वचिन्निरन्तरमहामद्यपानरतः क्वापि वर्त्तिनीपातनेन क्वचित् क्षत्रखननेन क्वापि बन्दिग्रहणेन क्वचिद्वर्णादित्रोटनेन क्वापि कूटकारककूटद्यूतकरधूर्त्तठगविद्यादिप्रयोगैः सकलजनवञ्चनेन क्वचित्तलारगुप्तिपालामात्यादिखरकर्म्माचरणेन क्वापीक्षुक्षेत्रादिकरणेन क्वचित् संसक्ततिलेक्षुपीलनेन क्वचिन्मांसविक्रयेण क्वापि मदिरावाणिज्येन क्वचिच्छस्त्रलाक्षालोहहलमुशलोदूखलशिलापट्टघरट्टादिबहुसावद्यवस्तुविक्रयेण समुपकल्पितात्मकुटुम्बकुंठितप्राणवृत्तिरनन्तवारा व्यावृत्त्य भ्रमन्नेकेन्द्रियादिषु दुःखार्त्तः स्थितः पुनरप्यनन्तपुद्गलपरावर्त्तानिति, एवमस्मिन् मनुजगतिनगर्यामनन्तशः समागच्छति व्यावृत्त्यमानेन चान्यदा मोहमहीपतिः किंचित् समुपजातचिन्त एकान्ते स्वमन्त्रिमण्डलमुपवेश्य प्रोक्तवान्–अहो ! तावदनेन संसारिजन्तुना सह मदीयादेशेन संव्यवहारनगरादारभ्यैतावन्तं कालं यावदयं महाभागो मिथ्यादर्शनमहत्तमोऽनवरतं क्षणमप्यवियुक्तो भ्रान्तः, तत्पृष्ठतश्च मदादेशेनैव सदैव तदनुचरौ ज्ञानावरणाज्ञानमहासुभटावपि तथैव हिण्डितौ, एकत्रितयप्रभावतश्चानेन नाकर्णितं क्वचिद्धर्मवार्त्तामात्रमपि नावगतं गुरुनामापि न ज्ञातस्तत्त्वलेशोऽपि, किं बहुना ?, कर्णेऽपि तस्य न प्रविष्टानि धर्म इत्यक्षराणि, न ज्ञातः किंचिज्ज्ञजनभाषितस्याप्यर्थः, केवलमाहारनिद्रामैथुनप्रसक्तो बभ्राम वराकः, साम्प्रतं त्वमुं कर्मपरिणामः कनकपुरे अमरश्रेष्ठिनन्दाभार्ययोः पुत्रत्वेनोत्पिपादयिषुः श्रूयते, सधर्म्मप्रचारं च किंचित्तन्नगरं, न जानीमः तस्मिँस्तत्र गते किमस्माकं संपत्स्यत इति, तदेतदाकर्ण्य मिथ्यादर्शनमन्त्रिणा दत्त्वा अज्ञानस्य हस्ततले तालां प्रोक्तम्–अहो सुन्दरतरमेव जातं यत् कुकुट्टयंडस्योपरि लुठितो घृतघटः, तद्ध्यमरश्रे-

ष्ठिनो गृहं सबालवृद्धमप्यसदाज्ञान्यवस्थितमेव, ततस्तत्र सर्वं वयमेव भलिष्यामो, यदि अस्मद्योग्यं विशेषतः किंचिद्भविष्यति, परमनन्तं देवकटकं, तत्र रसगृद्ध्यकार्यप्रवृत्तिरुजादिभिरपि व्याप्रियमाणाभिर्वयमद्यापि विशेषतस्तथाविधमात्मनोऽवसरं न पश्यामः, सामान्यतस्तु सदा समस्तमपि कटकं देवेनापि मध्यवर्त्तिना व्याप्रियमाणमेवास्ते, कस्तत्रास्मद्गुणो गीयतां ?, तदेतन्मिथ्यादर्शनमहत्तमस्योच्चैर्भाषितं श्रुत्वा बहिश्चित्तव्यामोहास्थानमण्डपोपविष्टया हसितमट्टट्टहासेनैकया योषिता पंढेन च, ततो विस्मितः समुत्थाय विपर्याससिनिवहनाम्नि विष्टरे मोहनृपो बहिरेव प्रकटः समुपविश्यावोचद्—वत्से ! किं त्वया पण्डकेन चामुना हसितमत्र ?, ततः प्रणम्य सा प्राह—समस्तजगद्दुःखोत्पत्तये स्वयमेव नियुक्तामिष्टजनवियोजिकाभिधानां महापदं मां जानाति तावद्देव !, मरणाभिधानश्च भुवनत्रयाप्रतिहतसामर्थ्यः शक्रचक्रिणामप्यलङ्घ्यशासनो महाधाटीनायकः सर्वत्र पातिताकाण्डविड्वरो युष्माकं युष्मत्प्रसादात् सबालवृद्धसमस्तजगज्जन्तूनां च सदैव विदित एवायं पण्डकः, किमत्र कथयाम्यहम् ? । इतश्च—नीतोऽसौ युष्मद्बन्धुना संसारिजीवः कनकपुरवासिनोऽमरश्रेष्ठिनो गृहे क्षिप्तश्च नन्दागर्भे जाताश्च षण्मासाः, ततश्च समुपलक्षितदेवमनोऽभिप्राया गताऽहं मरणसहायिनी तत्र, उपसंहृतस्तावत् तत्पिता, जाते तस्मिँस्तज्जननी शेषमानुषाणि च, ततः क्षणादनेन मरणमहासुभटेन सोऽप्युपसंहृतो वराकस्तावद्यावत् निष्ठापितं नाम तत्कुलस्यापि, तत्र क्षिप्तश्चासौ व्यावृत्त्यैकेन्द्रियादिषु, तेषु भ्रमन्नसौ पुनः स्थास्यति अनन्तपुद्गलपरावर्त्तानित्यतोऽयथार्थं मिथ्यादर्शनवचः समाकर्ण्य हसितमावाभ्यामिति, ततः सहर्षमवलोक्य करेण परामृश्य चाग्रहनिकरनामकं निजकूर्चं प्रोक्तं मोहनरपतिना—अहो ! पश्यतु मत्सैनिकानां पण्डकानामप्येतावत् सामर्थ्यं, ततो मरणमुवाच—मैवमादिशतु स्वामी, प्रभुप्रभाव एवायं, तथाहि—सिध्यन्ति मन्द-

मतयोऽपि यदत्र कार्ये, सम्भावनागुणमवेहि तमीश्वराणाम् । भिन्द्यात् स पङ्गुररुणोऽपि कथं तमांसि, सूर्यो रथस्य धुरि तं यदि नाकरिष्यत्? ॥ १ ॥ शाखामृगस्य शाखायाः, शाखां गन्तुं पराक्रमः । यत् पुनस्तीर्यतेऽम्भोधिः, प्रभावः प्राभवो हि सः ॥ २ ॥ ततो मोहनृपेणोक्तं–वत्स ! इतःप्रभृति सर्वापत्समूहसहायस्य तत्र तत्र नियोगः, सम्यग्निरीक्षमाणेन स्थेयं, मनुजगतिपुरीमुपागतस्य दुष्टस्य तस्य क्वचिदप्युत्थानमपि न देयं, सत्वरमेवाविज्ञातधर्माक्षरो निर्मूलमुन्मूल्य पश्चान्मुखो व्यावर्त्तनीयः, आदेशः प्रमाणमित्यभिधायोत्थिताः सर्वेऽपि मरणादयः, चिरं च निरीक्षमाणानाममीषां समानीय कर्मपरिणामेनासौ प्रवेशितः कुलटानारीगर्भे, तत्र च दुष्टौषधादिपातेन प्राप्तः प्राणान्तिकमहापदो, मरणाघ्रातश्च गलितो गर्भादपि, व्यावर्त्त्य गमितस्तेनैवैकेन्द्रियादिषु, धृतस्तावन्तमेव कालं, तदन्ते चानीतः कर्मणा कथमप्यसौ प्रथमप्रसवायाः स्त्रिया गर्भे, तत्रापि योनियन्त्रनिष्पीडितो महावेदनासमुद्घातोजायमान एव सह जनन्या पुनरुपसंहृतो मरणेन, व्यावर्त्त्य विधृतस्तथैवैकेन्द्रियादिष्वनन्तकालम्, एवं क्वचिद्वार्षिकः क्वचिद्द्विवार्षिकः क्वचित्त्रिवार्षिकः इत्याद्यकाण्ड एव बालाद्यवस्थोऽनुपलब्धधर्माक्षरोऽनन्तवाराः सर्वापत्सहितेन मरणेन संहृत्य व्यावर्त्तितः क्षिप्त एकेन्द्रियादिषु, प्रतिवारं च धृतः तेषु परिभ्रमन् अनन्तपुद्गलपरावर्त्तानिति ।

इतश्चास्ति मनुष्यक्षेत्रे श्रीनिलयं नाम नगरं, तत्र च धनतिलको नाम श्रेष्ठी, धनमतिर्नाम गृहिणी, तद्गर्भे च क्षिप्तोऽन्यदा कर्मपरिणामेनासौ संसारिजीवः, तदेतद् विज्ञाय भीतचेतसा निवेदितं मोहनरेन्द्रेण मिथ्यादर्शनमन्त्रिणे, तेनाप्यधोदृशा क्षणं मौनमवलम्ब्य ततो विधूय किंचिच्छिरो विमुच्य हुंकारमभिहितम्–अहो भविष्यत्यतःप्रभृति विशेषतोऽस्मद्योग्यं तदिदं कुलं, यद्यपि प्रतिपक्षसैनिकैरद्यापि न कश्चिद्विप्रतारितं तथाऽप्यस्माभिरपि सामान्यत एव तद्विषयीकृतं वर्त्तते, विशेषतस्त्व-

द्यापि न प्रतिजागरितं, परं तथापि नेह देवेन काप्याशङ्का विधेया, क गच्छति भवद्भिर्दृष्टोऽयं वराकः ?, अचिराद्गले गृहीत्वा विज्ञापयिष्यत इति विधाय प्रतिलब्धविसर्जनव्रीडको गतो मिथ्यादर्शनमन्त्री स्वं स्थानं, समध्यासितश्च चिन्तया, स्थितो वामकरतलन्यस्तैककपोलश्चिरं, ततो दृष्टः कुदृष्टिनामिकया स्वभार्यया, अभिहितश्च तया-आर्यपुत्र ! केयं धन्या जगत्यसाधारणसौभाग्यभूमिः यत्कृतेऽमररमणीनामप्यभिलषणीयस्य भवतोऽप्येतावती चिन्ता ?, ततस्तेनोक्तं-प्रिये ! केलिवचनमपि नेदृशं वक्तुमर्हसि, यतस्त्वां विहाय मम स्वप्नेऽपि नान्या मनस्यवतिष्ठते योषित्, कार्यान्तरविषया त्वियं चिन्ता, ततः ससम्भ्रमया भ्रुवौ समुत्क्षिप्य प्रोक्तं तया-किं नाम तदेतत् कार्यं यत्र लीलात्मवशीकृताशेषत्रिभुवनस्यार्यपुत्रस्याप्येतावान्मनोव्याक्षेपः ?, तत् कथ्यतां यदि ममापि कथनीयमिदं, ततोऽनेनोक्तं-सुलोचने ! नैतावन्तं कालं मया तवाकथितं किंचिन्मुक्तं, मद्गृहे हि विशेषकार्याणां सर्वेषामपि त्वमेव चिन्तयित्री, ततः प्रस्तुतमपि श्रूयतां-चारित्रधर्मस्य सहायतया प्रतिपन्नः संसारिजीवः कर्म्मपरिणामेन, नीतस्तावत् साम्प्रतं श्रीनिलयनगरनिवासिधनश्रेष्ठिगृहे च, तद्विषये च कृता मया प्रभुपुरतो महती प्रतिज्ञा, सा च त्वयाऽपि श्रुता भविष्यति, तया प्रोक्तम्-एवमेतत्, तत इतरेणोक्तं-दुर्घटं चेतत् कमलवदने !, यतः समारूढोऽत्र द्वितीयपक्षे कर्म्मपरिणामः, आयासितं चाद्यापि निविडतयाऽस्माभिस्तत् कुलं, निपुणाश्चास्मद्वासितान्यपि कुलानि विप्रतारयितुं प्रतिपक्षाः, विशेषतश्चासौ असत्प्रतिपन्थी वष्टः सम्यग्दर्शनः, तस्य हि सेवनीया शक्राणामपि प्रार्थनीया चक्रिणामपि चित्तस्था सदैव सन्मुनीनामपि आकृष्टमानसा महीभुजामपि अभिलषणीया परमविदुषामपि ध्येया ध्यानिनामपि महासौभाग्यामृततरङ्गिणी समस्ति धर्मबुद्धिर्नाम दुहिता, तां चात्मवशीकरणाय प्राणिनां प्रथममेव प्रेषयत्यसौ, दृष्ट्वा चेमां केचित् सुष्ठु वासिता अप्य-

स्मामिः सदा भक्ता अप्यस्मत्प्रभोः अहर्निशं निबिडं लग्ना अपि मच्चरणेषु झगित्येवानुरज्यन्ति तस्यां, शिथिलीकुर्वन्ति शेषव्यापारान्, विरज्यन्ति महाकुलोत्पन्नसौभाग्यान्वितास्वप्यन्यवनितासु, न गणयत्यस्मदुपदेशान्, सर्वथा परिहृत्य कुटुम्बानि विश्रमन्ति श्रमिता इव लग्नास्तत्पृष्ठे, प्रतिपद्यन्ते तत्पितरमेवान्यपरिहारेण महास्वामिनं, ततः सर्वात्मना वशीभवन्त्यस्याः, अत्यन्तासक्ताश्च तस्यां पश्यन्ति महावैरिण इवास्मान्, ततः समूलकापंकपत्यशेषमप्यस्मत्पक्षं, क्षयकारिणीं तां विचिन्त्य प्रिये ! प्रवर्द्धते इयं मम चिन्तेति, ततः सावज्ञं किंचिद्विहस्य प्रोक्तं कुदृष्ट्या—आर्यपुत्र ! शरच्चन्द्रचन्द्रिकाप्लावितपौर्णमासीनिशायां दूरावलोकितार्कपत्रोत्प्रेक्षितव्याघ्रकर्णस्य तथाविधवणिज इव स्वमत्युत्प्रेक्षितमस्थाने भवतो भयमिदं, कथमित्यत्र ब्रवीमि, यत्तावदुक्तं 'समारूढोऽत्र द्वितीयपक्षं कर्म्मपरिणाम' इति तत्र सत्यं बलवानसौ, मिलितानामेव च स एव प्रभुः, केवलमयमेकेन पक्षेणास्माकमपि मिलति, द्वितीयेन तु तेषां, अत एव भयमिति चेन्नैवं, यतः सार्वदिकोऽयमस्माकं कादाचित्कश्च तेषां, निबिडोऽस्मासु दाक्षिण्यमात्रिकस्तेषां, स्वजातिरस्माकं वैरिपक्षे तु तेषां, अपरं च—अयं संसारिजीवो यदेतावन्तं कालं भवदुःखस्खलितः कदर्थितश्च तत्र सर्वत्रायं कर्मपरिणाम एव मध्यवर्त्ती, अनेन विना भवंतोऽस्य न कदाचिदप्यनिष्टं कर्त्तुमीशते, नाप्यन्यः कोऽपीष्टमिति। यदप्युक्तं—'वासकत्वे निपुणाः प्रतिपक्षाः' तदपि मम चेतसि हास्यमावहति, यतस्तैरपि निपुणवासकैरनादिकालेनैकनिगोदमात्रवर्त्तिनोऽपि जीवा नाद्याप्यात्मवशीकृताः, किन्तु तदनन्तभागमात्रमेव, शेषं तु युष्मद्दासत्वापन्नाऽनन्तजन्तुसंघातपूरितं त्रिभुवनमेतत् संसारमहानाटक एव अहर्निशं नृत्यदास्ते, तत् कोऽत्र निपुणो वासक इति त्यक्तभयैर्भूत्वा चिन्त्यतामिति, यत् पुनरुक्तं 'तस्य हि सेवनीया शक्राणा' मित्यादि, तेन भीमतस्करदर्शनोद्भवभयोद्भ्रान्तचेतसो घोटारूढाति-

कातरस्य घोट इव प्रियतमस्य सर्वथैवात्माऽपि विस्मृत इति लक्षयामि, यत आवयोरपि धर्मबुद्धिनामिका दुहिता समस्तस्येव तादृशी तदनन्तगुणसौभाग्या, तामेव हि वल्लभां भुवनत्रयमिदं मूर्ध्नि प्रहतं संततमासेवते प्रायः, सा तु सम्यग्दर्शनदुहिता मद्दुहितृभयभीतमानसा छन्नमभिसरंती अस्मत्पुत्रिकापरिहृतैरेव कैश्चित् स्वल्पैर्वञ्चकवादभूतैर्दुर्विदग्धैराश्रीयते, तत् किं तां वराकीं वर्णयसि मत्पुरतस्तर्हि इह ?, किं बहुना ?, यदि त्वमतिभीतोऽसि तर्हि मामेव मुत्कलय तत्र येन त्वद्दुहितृदामतामानीय गलग्राहं गृहीत्वा व्यावर्त्य दर्शयामि भूरिशः प्रागननुभूतभूतिं तस्य वराकस्य, जानामि चाहं प्रियतम ! यदेवं प्रागल्भ्येन नार्हत्येव वक्तुं महिलाजनः, स्त्रियो हि सविनयाल्पभाषिण्यः सलज्जा एव शोभन्ते, धाष्टर्यंन्तु तासां वचनीयतामेवावहति, परमतीवार्त्तिगृहीतैरेवमभिहितमिति नाप्रसादो विधेयः, क्षमणीयमेव मम सर्वमिति, ततो विहस्य प्राह मिथ्यादर्शनः–प्रिये ! महिलाप्रधान एव भवति मोहमहाराजानुगतो लोको, न तस्यैव लज्जां स जनयति, तत साधूक्तं त्वया, गच्छ त्वमेव तत्र, यथा भव्यं भवति तथा कुर्विति, तयोक्तं–प्राणेश ! नैवं, त्वद्दृदयमात्रभाव्यमेव मादृशां प्रागल्भ्यमेतत्, तदभावे तु के वयं ?, तस्माद्भवद्भिरपि तत्रागन्तव्यमेव, ततस्तेनोक्तम्–एवमेतत्, नहि वियुक्तौ कदाचिदप्यावां, केवलमिह व्यापारणीयं त्वयैव, तटस्थास्तु वयमपि द्रक्ष्याम इत्यभिधाय गतः सकलत्रापत्यस्तत्र मिथ्यादर्शनः, प्रेषिताश्च पृष्ठतो मोहनृपेण सन्त्यज्य सर्वापदो व्यसनानि धनपिपासा लाभान्तरायादयश्च ॥ इतश्च प्रसूता श्रीनिलयनगरे धनतिलकश्रेष्ठिनो गृहिणी, जातः पुत्रः, कृतानि वर्द्धापनकमङ्गलानि, स्थापितं तस्य वैश्रमण इति नाम, गतो वृद्धिमधीताः कलाः प्राप्तश्च यौवनं, ततो निजावसरं विज्ञाय धनपिपासया सहर्षया गाढमुरःपीडमालिङ्गितोऽसौ, ततः सोऽपि समुच्छलिततीव्रतदभिलाषस्तां रिरंसुरभिहितस्तया–यदि मां प्रिययसि तदा कुरु प्रचुरान् धनाऽर्जनो-

पायान् उपविश स्वयं रत्नसुवर्णवस्त्राद्यापणेषु व्यवहारय पूगीफलगन्धधान्यकर्पासगुलिकालोहलाक्षाद्यापणेषु अन्यान् बहून् वणिक्पुत्रान् प्रेषयान्यप्रदेशेषु बहुभाण्डभृतभूरिगंत्रीप्रवाहान् वाहय बलिवर्दान् समुत्सृजोष्ट्रमंडलीं निरूपय रासभसार्थान् प्रवर्त्तय प्रकृष्टक्रयाणकापूरितप्रवहणानि महाजलधौ गृह्णन्तां शुल्कमण्डपिकादिपट्टकाः अभ्यस्यतां धातुवादः शिक्ष्यतां खन्यवादः अभ्यस्यतां रसबिलप्रवेशः परिशीलयंतां कृत्रिमकयाणककरणानि, ततस्तेनोल्लस्य प्रोक्तं–तन्वङ्गि! साधूपदिष्टं, न भवन्त्यन्यथा गृहप्राङ्गणे रत्नराशयो न सम्पद्यन्ते सुवर्णमहाकूटानीत्युपविष्टस्तावद्रत्नसुवर्णाद्यापणेषु, प्रारब्धो विपुलव्यवहारः, ततो निजानः मानमयो लाभान्तरायेण, स्थितः स सन्निधाने वैश्रमणस्य, न भवति च तत्प्रभावात् काणकपर्दिकाया अपि लाभः, चिन्तयति ततोऽयम्–अहो नोपार्जितमत्र हट्टस्यापि भाटकं, तदर्जने तु चिंतयति–हन्त! अद्यापि नोत्पन्ना वणिक्पुत्राणामपि वृत्तिः, तदुत्पत्तौ तु चिन्तयति-कथं नु संपद्यते गृहव्ययलाभः?, तल्लाभे चाशंसति भोगोपभोगादि, ततस्तत् किमपि भवति येन मूलादप्यर्पयति किंचित्, ततो धनपिपासाजनितमहार्त्तध्यानस्यैतस्ततोऽवलोकयतस्तत्स्यान्य उद्भ्रान्तलोचनः समुत्तालगतिः समायातः कोऽपि पुरुषः, अर्थितस्तेन रहसि विश्रामणां, दर्शितमतिप्रधानं शिरःकर्णकण्ठाद्याभरणं, विज्ञातं तेन पुनरिङ्गितादिना तस्कराहृतमेतदिति, ततः संचिन्तितः श्रेष्ठिपुत्रो धनपिपासया–गृहाण, मा त्याक्षीरिदं, को जानाति भग्नं?, पुरतो यद्भविष्यति तत् करिष्यते, ततो गृहीतमनेन तदत्यन्ताल्पमूल्यकाणक्रयेण, गतस्तस्करः, समायाताः पृष्ठत एव राजपुरुषाः, बद्धस्तैर्वणिक् गलोद्ध एव, कृतः पुरतो हन्यमानो उद्धा(लकुटी)भिश्चूर्ण्यमानो निष्ठुरकृपाणजवैर्विगोप्यमानः सर्वजनेन नीतो राजकुले, गृहमदीयाभरणमिदमनेनेत्थं गृहीतमिति निवेदिते समाम्नातो वध्यः पार्थिवेन, ततो मेलितो जनकेन महाजनो, विज्ञप्तो राजा,

ततो महाजनोपरोधात् कथमपि महादण्डं कृत्वा मुक्तस्तेनासौ, धनपिपासाप्रेरितेन च प्रारब्धानि पुरमध्य एव प्रभूतवाणिज्यानि, प्रतिघ्नाति च सर्वत्र तुच्छमपि लाभं तदन्तरायः, प्राप्यते च प्रतिपदं महापद्भिः, ततोऽन्यदा प्रेरितो धनपिपासयाऽसौ देशान्तरगमने, ततः पितरौ विमोच्य प्रचुरक्रयाणकभृतगन्त्रीर्गृहीत्वा गतस्तत्र, मार्गे च पतितो महाटव्यां बाधितः पिपासया सर्वोऽपि सार्थो, यत्नेनान्विष्यमाणमपि न प्राप्तं क्वापि पानीयं, त्रुटितजलाशश्च मूर्च्छानिमीलिताक्षः पतितः सर्वोऽपि जनो, जातश्च निश्चेष्टः, अत्रान्तरे समायाता महातस्करधाटी, दृष्ट्वा च तत्तदवस्थमपहृत्य सर्वमपि सर्वस्वं गताः तस्कराः, तत्र कृपालुना तत्रागतेन केनापि पथिकेन कुतोऽपि समानीय पायिताः सर्वेऽपि स्वल्पजलं, स्वस्थीभूतानां चोपदिष्टस्तेषां जलाशयः, तैश्च तत्र गत्वा पीतं जलं, क्षालितान्यङ्गानि, स्वस्थीभूताश्च प्रवृत्ताः पुरतो गन्तुं, शम्बलाद्यभावाच्च गतः सर्वोऽप्यात्मीयात्मीयद्वारैः, वैश्रमणोऽपि प्राप्तो ग्राममेकं, पीडितो बुभुक्षया पातितो निश्चेष्टस्तरुच्छायायां, दृष्टः केनापि अनुकम्पापरेण, दापितं तेन किमप्योदनादि, स्वस्थीभूतश्च पुरतो गच्छन् श्रान्तो बाढं, न शक्नोति पद्भ्यां गन्तुं, सुकुमारतया च स्फुटित्वा चरणतले समागच्छति शोणितं, मुहुर्मुहुर्मूर्च्छति लुठति पतति परिदेवते क्रंदति शोचति विलपति, मार्गश्रमाद् विभवकुटुम्बवियोगाच्च बहिरन्तश्चोत्पन्नमहादुःखः, तन्नास्ति यद्दीनतामापन्नोऽसौ नाचेष्टत, ततोऽतिकष्टेन प्रतिग्राममटति भिक्षां, तल्लाभमपि महानिर्दयोऽतिनिस्त्रिंशः प्रतिहन्ति लाभान्तरायः, इत्येवमतिनिष्करुणाभिः प्रतिपदमापतन्तीभिः महापद्भिरसौ कष्टेन समागतः किमपि वेलाकूलं, धृतः केनापि वणिक्पुत्रतया, जातश्च किंचित् सकिंचनः, प्रेरितो धनपिपासया, प्रारब्धं वाणिज्यं, अर्जितं प्रभूततरं धनं, ततः समाकर्णितः क्वाप्ययं श्लोकः—" इक्षुक्षेत्रं समुद्रश्च, योनिपोषणमेव च। प्रसादो भूभुजां

नैव, मयो घ्नन्ति दरिद्रताम् ॥ १ ॥" इति, प्रोत्साहितश्च धनपिपासया भृतं क्रयाणकानां प्रवहणं, प्रवाहितं समुद्रे, गतस्तन्मध्यदेशे, तत्र चोन्नतं घनमण्डलं गर्जति मेघः समुद्रश्च चमत्कुर्वन्ति सर्वतो विद्युतः प्रवृत्तश्चातिप्रतिकूलः पवनः, ततः समुच्छलदतुच्छलहरीभिर्विदलितं शतधा तद्यानपात्रं, प्राप्तैकफलकखण्डश्च वैश्रमणो जलचरजन्तुजलकल्लोलाभिघातादिजनितदुःखान्यनुभवन्नीरकल्लोलमालाप्रेरितः प्राप्तः क्वचिद्दूरदेशे यत्र नामापि न ज्ञायते स्वदेशस्य, वार्त्तापि न श्रूयते सुहृत्स्वजनादीनां, ततस्तत्र दुःखभाराक्रान्तस्यैतस्य गण्डोपरि स्फोटकल्पा लग्ना पृष्ठतो रोगमहापत्, तदनुभावतश्च गृहीतो ज्वरेण बाधितः शिरोबाधया शल्यितः शूलेन पीडितोऽन्यरोगैश्च, शयानः शून्यदेवकुलेषु निषीदन् सभासु प्रपतन् प्रपासु लुठन् मठेषु क्रन्दन् देशिककुटीषु भ्रमन् प्रतिगृहं जल्पन् दीनानि याचमानः पथ्यौषधादीनि प्रतिहन्यमानतल्लाभो लाभान्तरायेण दुःखितशिरं विचरन् विमुक्तः कथमपि रोगैः, पुनर्धनपिपासाप्रेरितः करोति वाणिज्यानि, अर्जयति च प्रभूतवाराः कथमपि किञ्चिद्धनं, परं लूष्यते क्वचिन्नराधिपैः धूर्त्यते क्वापि धूर्तैः गृह्यते क्वचिच्चोरैः उपद्रूयते क्वापि पावकेनेत्येवं नानादेशेषु पर्यटन् करोति क्वचिद्धातुवादं, भक्ष्यते तत्र वार्त्तिकैः, परिशीलयति क्वापि खन्यवादं, निहन्यते तत्र शिलोपलादिना व्यन्तरपिशाचादिभिः, भक्ष्यते भुजङ्गैर्दश्यते वृश्चिकैः सहते महावेदनानिकरमित्येवं प्रतिसमयमापतन्महापत्तिरतीव निर्विण्णो धनस्वजनप्रदेशदारवियुक्तोऽतिदुःखितः पर्यटन् ग्रामनगरादिषु गतः कदाचित् क्वापि विद्यामठे, पठितं च तत्र केनापि धर्म्मशास्त्रपाठकेन,—" स्वजनधनभवनयौवनवनितातन्वाद्यनित्यमिदमखिलम् । ज्ञात्वाऽऽपत्त्राणसहं धर्मं शरणं भजत लोकाः ॥ १ ॥ श्रुतमनेनैतत्, ततश्चिन्तितम्—अहो यत्र क्वचिद्दुःखितैर्गम्यते यदग्रतश्च निजदुःखं निवेद्यते स सर्वोऽप्येवमेव वदति—न

कृतोऽन्यजन्मनि धर्मस्त्वया, अकृतधर्माणां च प्राणिनां अशरणानां पतन्ति प्रतिपदं महापदः, तस्मात् केवलापायपूरितेऽत्र संसारे धर्म एव शरणं तेषां, नान्यदित्यादि, अत्रान्तरे चिन्तितं मिथ्यादर्शनगृहिण्या कुदृष्ट्या—अहो चिराज्ज्ञातोऽद्य ममावसरो, यत इदानीं वैराग्यनामकस्य प्रतिपक्षमानुषस्य किंचित् प्रवेशोऽत्र पात्रे लक्ष्यते, तथैतत्पृष्ठत एव साऽस्मत्प्रतिपन्थिनी सम्यग्दर्शनदुहिता कथमप्यागच्छति तदा सर्वमेवालं भवतीति विचिन्त्य सत्वरं प्रेषिता धर्मबुद्धिनामिका निजदुहिता, गताऽसौ तदन्तिकं, तदनुभावाचोत्पन्नो वैश्रमणस्य धर्मकरणाभिप्रायः, चिन्तयति च—यदि तावत् सर्वेषामपि विज्ञानामयमेवाभिप्रायस्तर्हि सर्वाभिलषितार्थसिद्धिहेतुर्धर्म एव प्रथमं किमिति न क्रियते ?, पुष्टकारणसद्भावे हि कार्याणि स्वत एव जायन्ते, तस्माद् गच्छामि स्वदेशे पश्यामि मातापितरौ, ततो निश्चयेन धर्ममेव तावत् करिष्यामीति निश्चित्य गतः कंचिद्वेलाकूलं, कर्म्मकरवृत्त्या समारूढः प्रवहणे, लग्नं परतटे तत्, ततः स्थलमार्गेण कथमपि चिरात् प्राप्तः स्वदेशं, ततः श्रीनिलयनगरे यावदागच्छति तावदुपरतः पिता विपन्ना माता गतः कोऽपि क्वापि परिजनः शीर्णं गृहं पतितानि हट्टानि भ्रष्टो विभवः, ततस्तत्तथाविधं दृष्ट्वा गतः परमं विषादं, पतितो महाशोके, प्रलपति स्म सुचिरं, निन्दति स्म बहुधाऽऽत्मानं, ततो धर्म्मबुद्धिनिबद्धमानसः कथमप्यात्मानं सन्धार्य करोति स्म मातापित्रोः परलोककृत्यानि, अत्रान्तरे चारित्रधर्मादिभिः सर्वैर्मिलित्वा निरूपितः सद्बोधमहत्तमः कर्म्मपरिणामस्यान्तिके, ततो गत्वाऽसौ प्रोक्तस्तेन—महाराज ! भवद्भिः पूर्वमिदं प्रतिपन्नमासीद् यदेष एकः संसारिजीवो भवतां सहायो भविष्यति, अस्य च जल्पस्यानन्तानन्तपुद्गलपरावर्त्ताः, न चास्माकमद्याप्यसौ वार्त्तागोचरमप्यागच्छति, तत् किमीदृशमेतत् ?, नहि महतां प्रतिपन्नानि युगान्तेऽप्यन्यथा भवन्ति, ततः कर्म्मभूपालेन भ्रूलतोत्क्षेपगर्भं वदन-

सुतस्य प्रोक्तं-हुं वत्स ! न जानासि त्वमद्यापि तद्व्यतिकरे यद्वर्त्तते, अहं हि युष्मदभिमुखं तमानयामि, बद्धाभिनिवेशास्तु सद्बान्धवास्तं वराकं पुनः पुनः व्यावर्त्तयन्ति, तदीदृशे गृहविरोधे किमहं करोमि ?, न चैकेनैव मया कृतं किंचिदिह भवति, किन्तु तथाभव्यत्वस्वभावलोकस्थितितत्पुरुषकारकालपरिणत्यादयोऽप्यत्र व्याप्रियन्ते, ततस्तैः सह पर्यालोच्य समये भवतामपि सर्वं करिष्यते समीहितं, न हि ममात्मप्रतिपन्नं किंचिद्विस्मृतं तत्, किलेदानीं धर्म्मबुद्धिस्तदन्तिके गता श्रूयते, तथाऽप्यस्माकं किमद्यापि समयो न भविष्यतीति सद्बोधेनोक्ते कर्म्मभूपालेन स्वभावनाम्नो निजामात्यस्य करतले तालां दत्त्वा उर्ध्वीकृत्योक्तम्-अहो सत्या धर्म्मबुद्धिः सा, पश्यत सद्बोधोऽपि कथं जल्पति ?, महापापबुद्धिरेव हि सा, केवलं नाममात्रेणात्मनो धर्म्मबुद्धित्वं प्रख्याप्य नाममात्रसादृश्यमात्रभ्रमितं वञ्चयति वराकं सर्वमपि जगदेतत्, यां तु सम्यग्दर्शनदुहितृरूपां धर्म्मबुद्धिं त्वमवगच्छसि अन्यैव सा, यतः पीयूषवृष्टिः प्राणिनां युष्मदभ्युदयहेतुश्च सा, एषा तु तेषाममन्त्रभेषजमहाकूटविषकन्दली, समूलोन्मूलनहेतुश्च भवतां, नामतस्तुल्या अपि ह्यर्थशीलेऽतिदूरं विसंवदन्ति, यतः-सद्योघातिगरे जीवनीये च तुल्यमेव विषमिति नाम, कुरूरपर्णे नागवल्लीदले च सममेव पत्राभिधानं, कांस्यत्रपुताम्रादिमये रजतकनकादिनाणके एकरूपैव रूपकाख्या, अत्र निम्बादौ न वृक्षध्वनिः, दधिदुग्धघृतादौ च सदृशी रससंज्ञा, अथ च स्वभावविसंवादः सर्वत्र प्रतीत एव, एतदास्माकं वक्तुं न युज्यते, अस्मद्भ्रातृसचिवदुहिता हि सा, परं शत्रौ मित्रे च यथावद् ब्रुवतामप्यस्माकमागच्छति, किं कुर्मः ?, ततः स्वभावामात्येनोक्तं-देव ! किमनेन ?, न खल्वनुभवंत एव न जानन्तीत्यमी सर्वमपि तच्चेष्टितं, ततः शिरो विधूय नखच्छोटिकां दत्त्वा प्रोक्तं कर्मपरिणामभूपेन-अहो सत्यमुक्तं त्वया, सद्बोधो ह्यसौ, किमस्याविदितं ?, परं धूर्त्तस्तरुणश्चायं

मायावृहत् रुग्यंश्च भणित्वा झंपापयति, विप्लावयति चास्मान्, ततः कर्णौ पिधाय सक्रोधेनोक्तं—आः मैवमादिशत, युष्मत्प्रसादः सर्व एवायं, तद्गच्छामो वयं, युष्मदयोग्यं (अस्मद्योग्यं) किमप्यत्र भवति तदादेष्टव्यं, ततः भूपतिना अभिहितम्—एवं करिष्यते, व्रजत, शिवाः पन्थान इति, गतोऽसौ, निवेदितं सर्वमपि निजस्वामिनः। इतश्च मातापित्रादिमरणादिदुःखदुःखितो वैश्रमणः कुदृष्टिपुत्रिकया कारितो विशेपत एव धर्म्मकरणनिश्चयं, नीतश्चाकृष्य तन्नगरनिवासिस्वयंभुनाम्नस्त्रिदण्डिनो मठे, श्रावितस्तद्धर्मं, ग्राहितश्च प्रतिदिनागमनाभिग्रहं, आगच्छंश्च पुनः पुनस्तावद्वासितो यावज्जग्राह तद्दीक्षां, ततो ग्राहितः स्वशिक्षां, करोति शौचवादं स्नात्यगलितेपु नद्यादिजलेपु प्रतिदिनमेव वारत्रयं क्षालयति पुनः पुनस्ताम्रभाजनकौपीनाद्युपकरणानि, ततश्चोपरते गुरौ जातस्तत्स्थाने, दिशत्यनवरतमेवोन्मार्गं, दूपयति सन्मार्गं, द्वेष्टि सद्धर्मचारिणो, बहु मन्यते सर्वदैवात्मानं, ततोऽन्यदेत्थं कुधर्मबुद्धिवशीकृतो मठादिमूर्च्छितमानसश्च मृत्वा व्यावृत्त्य गत एकेन्द्रियादिपु, भ्रान्तस्तेपु पुनरप्यनन्तपुद्गलपरावर्त्तान्, ततो रञ्जिता स्वपुत्रिकया कुदृष्टिः, तया च तोपितो मिथ्यादर्शनः, तेनाप्यानन्दितो मोहराज इति, ततः पुनरप्यानीतोऽसौ कर्म्मपरिणामेन कथमपि मनुष्येपु, कृतो ब्रह्मदत्तब्राह्मणपुत्रः सोमदत्तनामा द्विजः, तत्रापि स्थिता समागत्यातिसन्निहिता स्वपुत्रिकां पुरस्कृत्य सभर्तृपरिजना कुदृष्टिः मोहप्रेपितं तत्सहायभूतं कुग्राहहिंसादिदुष्टबलं च, ततस्तत्रापि कारितो यज्ञान्, प्रवर्त्तितः पशुवधेपु, प्राशितस्तन्मांसानि, दापितो युक्तहललोहलवणसंसक्ततिलकर्प्पासोपानत्तुरगगोभूमिकामसत्रादिदानादि, प्रेरितः कर्तुं कन्योद्वाहनानि, एवमन्यान्यपि धर्मच्छलेन कारयित्वा प्रचुरपापानि पातितो नरकेष्वित्येवं पुनरपि पश्चान्मुखो नीत्वा एकेन्द्रियादिपु भ्रमन्निरुद्धोऽनन्तपुद्गलपरावर्त्तान्, एवमन्यान्यसौगतादिदर्शनानुगतं कृत्वा धर्मव्याजेन भूरि पापानि कारयित्वा मिथ्या-

दर्शनमन्त्रिणेन सकुटुम्बेन व्यावर्त्तितः नराकोऽनन्तवाराः, प्रतिवारं चैकेन्द्रियादिषु क्षिप्तः. परिरक्षितोऽनन्तपुद्गलपरावर्त्तान्, ततोऽन्यदा मनुजदेशान्तःपातिनि सौभाग्यपुरे नगरे सुन्दरगृहपतिगृहे वरुणाभिधानपुत्रतया समुत्पाद्य चिंतितं कर्म्मपरिणामेन-अहो नेतव्यस्तावदयं मया कथमपि चारित्रधर्मसमीपे, एतच्च महापापरूपिणी नाम्नैव तु धर्म्मबुद्धिर्यावदेतत्सन्निधाना न निर्घाटिता तावत् कर्तुं न शक्यते, तन्निर्घाटनं च सम्यग्दर्शनदुहितृशुद्धबुद्ध्यभिमतधर्माङ्गीकारे भवति. तदङ्गीकारं चानयोर्विशेषावगते स्वत एवासौ करोति. तद्विशेषावगमश्च शुद्धसिद्धान्तश्रुतिदूतिकाकथित एवावगम्यते, तद्दूतिकासङ्गमश्च सदागमाभिधान एव सम्भवति, सदागमश्च सद्गुरुसमीपस्थ एव सर्वदैव पर्यटति, तस्मादानयाम्यस्य सन्निधाने सद्गुरुं येन सर्वं सुस्थं भवति. तत इदं कर्म्मपरिणामेहितं ज्ञात्वा भीतो मोहराजः क्षुभितो रागकेशरी दोलायितो द्वेषगजेन्द्रः जातं वज्राहतमिव समस्तमपि कुटुम्बं. ततो मिलितो मन्त्रिवर्गः समागताः सामन्ताः, सर्वैश्चाभिहितं—देव ! क्षोभिताशेषत्रिभुवनस्य कोऽयं भवतोऽप्येतावान् क्षोभः ?, ततो दीर्घं निःश्वस्योक्तमनेन-यथा यूयं भणथ तथैतत्, मदीयेन डिम्भमात्रेणापि शक्रादयोऽपि क्षोभ्यन्ते, ननु मदीयस्य कोऽपि क्वापि क्षोभं जनयितुमलं, किं कुर्म्मः ?, उद्वेजिता वयमनेन सर्वदाऽत्रुटितगृहविरोधेन, ततस्तैरुक्तं—किं नूतनं किञ्चित् कर्म्मपरिणामेन सह चलितं ?, ततो मोहराजेनोक्तं-किल नूतनं गणनीयं, यतस्तस्मिन्नेव युष्मद्विदिते संसारिजीवव्यतिकरे तदन्तिके केनापि सद्गुरुणा सह सोऽसद्वैरी सदागमस्तेन समानेतुमारब्धः श्रूयते योऽस्मान् समूलानपि कषति, ततः किलास्मत्कुलकन्दलीदावानलज्वालां श्रुतिदूतिकां तदन्तिके प्रेषयिष्यति, ततस्तैर्निर्मुक्तहुंकारमभिहितं सर्वैः—यद्येवं तर्हि न कर्त्तव्य एव सर्वथा क्षोभो, वयं हि तथा करिष्यामो यथैव तदपायमूलभूतः स गुरुरेव तत्र नागच्छति, ततस्तद्वचःसमाश्वा-

सितेन प्रोक्तं मोहक्षितीशेन-कुरुतैवं वत्साः !, पूरयत मम मनोरथान्, ततो गतास्तत्सैनिकाः, तैश्च सर्वैरपि पर्यालोच्य गुरोरागच्छत एव निरूपिता महापशकुनाः प्रेषितः शिष्याध्यापनादिविक्षेपः प्रोत्साहिताः शिरोव्यथादिरोगाः उत्पादिता अन्तराले पार्थिवविरोधादिप्रत्यूहाः, ततः प्रतिस्खलितः हठादेतैरागच्छन् गुरुः, ततश्च कुदृष्टिदुहितृवचनाद्धर्मच्छलेन कृतानेकमहापापो ग्रस्तः कदाचिन्महापदा, संहृतो वरुणो मरणेन, पुनरपि पराङ्मुखः परिभ्रमंश्चैकेन्द्रियादिषु धृतोऽनन्तं कालं, ततो जनितः पुनरपि मनुष्यक्षेत्रे विमलपुरनगरे रमणनाम्नः श्रेष्ठिनो गृहे संसारिजीवः सुमित्राभिधानपुत्रतया, समारूढश्चैष यौवनं, ततोऽन्यदा मोहबलस्खलनान्तरालेन केनापि कथमपि समालिङ्गितः संयमश्रिया शोभितः प्रशमाभरणेन दुष्प्रधृष्यस्तपस्तेजसा अभिगमनीयो भव्यभ्रमराणां सोममुखपङ्कजः सम्पत्त्या विलिप्तः सुगन्धिशीतलविलेपनेन मण्डितः सर्वाङ्गमेव सद्गुणमण्डनेन अचलश्चारित्रप्रतिज्ञायां स्थिरो दर्शनाङ्गीकारे निष्ठाप्राप्तो मतिश्रुतज्ञाने बहिर्बहुशालकाभिधानोद्याने समानीतः कर्मपरिणामेन सदागमान्वितो गुणजलधिनामा सूरिः, ततः शुद्धसिद्धान्तश्रुत्युत्कण्ठिताः समागच्छन्ति तदन्तिके राजामात्यश्रेष्ठिसार्थवाहादयः, ततो यावत् किल सुमित्रोऽपि तत्र गमिष्यति तावद्विज्ञाततद्व्यतिकरो रे रे गृह्णीत गृह्णीत, अन्यथा हताः सर्वेऽपीति ब्रुवाणः संभ्रमेणोत्थाय महीपतिः प्रेषयति तन्निवारणाय सुभटसमूहं, तद्यथा—निरूपयत्यालस्यं प्रेषयति कुटुम्बादिस्नेहमूढतालक्षणं मोहं प्रेरयति किमेतेऽपि जानन्तीतिरूपामवज्ञां उत्साहयति जात्यादिमदं तर्जयति क्रोधं प्रवर्त्तयति प्रमादं उच्छृङ्खलयति कार्पण्यं व्युत्सृजति नरकादिदुःखश्रवणभयं मुत्कलयति शोकं उज्ज्वलयति कुदृष्टिदेशनोद्भवाज्ञानं संचलयति गृहहट्टकृपिसेवाविषयव्याक्षेपान् उन्मुद्रयति नटदर्शनादिकुतूहलानि संवाहयति द्यूतक्रीडाः, इत्यादिभिः कृतकिलकिलारवैः सर्वैरपि तत्र गत्वा

केनापि कार्मिकदिने गुरुसमीपं गच्छन् सुमित्रो गले गृहीत्वा हठान्निरुध्य विधृतः, ततोऽन्यदिने गुरुरप्यन्यत्र विहृतः, कदाचित् सुमित्रोऽपि प्रेतप्रतिनिद्राघूर्णतामुपागतः. स्खलितस्तथैवैकेन्द्रियादिष्वनन्तकालं, समानीतोऽसौ पुनरपि मनुष्येष्वानीतौ च पुनः कथमपि सद्गुरुसदागमौ, न लब्धश्चालस्यादिप्रतिहतेनामुना वराकेण तथैव श्रुतिसङ्गमः, ततो नीतः पश्चान्मुखः मिथ्यादर्शन-कुदृष्टिदुहितृभ्यां, भ्रान्तः पुनरप्येकेन्द्रियादिष्वनन्तकालं, एवं तावद्यावदनन्तवाराः, अन्यदा च जनितोऽसौ पुनरप्यवन्तिनामिकायां नगर्यां गङ्गदत्तनाम्नो गृहपतेः सिन्धुदत्तनामा पुत्रः, प्राप्तो यौवनभरं, समानीतौ तथैव सद्गुरुसदागमौ, निषिध्य न हठादालस्यादानीतोऽसौ कर्मपरिणामेन कथमपि सद्गुरुसदागमसमीपे, ततो विज्ञायैतन् महाचिन्तासागरसमवगाढश्चिन्तयति मोहः क्षितिपालो वदति च—अहो मन्त्रिसामन्ताः! भवतायां यानि काण्डानि तानि मुक्तानि, किमिदानीं प्रेषयामि? तस्य वैरिणः पार्श्वे, भवति यतः श्रुतिसङ्गमः, ततो ज्ञानावरणसामन्तेनोत्थायाभिहितं-मैवमादिशतु देव!, अनन्तं हि देवस्य सैन्यं, भृतजलधरवद्, अद्यापि बिन्दुरपि नाकृष्यते, तदिदानीं मदीयदुहितुः शून्यतायास्तत्रावसरः, तत्सन्निधाने हि संपन्नोऽपि श्रुतिसंगमो निष्फल एव सम्पद्यते, तदादिश्यतामेषा, कृतं तथैव मोहनरेन्द्रेण, गता च सा तत्र, जातश्च सिन्धुदत्तस्य सद्गुरुसदागमसन्निधानाद् श्रुतिलाभः, कथिताश्च तथा विस्फार्य मिथ्यादर्शनकुदृष्टिदुहितृदोषा वर्णिताः सम्यग्दर्शनदुहितृगुणाः कथितानि मोहमर्माणि निवेदितानि तत्सैन्यविलसितानि प्रख्यापिताश्चारित्रधर्मप्रसादसम्पत्तयः प्रकटितस्तत्सैन्यसम्भवः सुखसन्दोहः, परं शून्यतासन्निधानादनेन कोऽहं का एषा किमिह कथ्यत इत्येतावदपि न विज्ञातं, दूरे तद्भाषितार्थः, तत उत्थितायां पर्षदि पृष्टः केनापि-किं श्रुतमिह भो! त्वया?, ततस्तेनोक्तं—न किंचिज्जानामीति, अन्यान्यदिनेष्वपि मित्राद्युपरोधेन केनचिद्

नतोऽसौ गुरुसमीपे, जातः श्रुतिसंगमः, परं शून्यतासन्निधानाचालन्यां जलमिव न किंचित्तत्र स्थितं, ततो गतावन्यत्र सद्गुरुसदागमौ, ततः सिन्धुदत्तः कुदृष्टिकुधर्मबुद्धिभ्यां भागवतादिसन्निधाने यदा नीयते तदा त्यजति तत्सन्निधानं शून्यता, त्रुध्यते सर्वमपि तदाख्यातं, करोति च तदुक्तमित्युपचितमहापापः पुनरपि निवर्त्त्य विधृत एकेन्द्रियादिष्वनन्तकालं, ततोऽन्यदा चिन्तितं कर्म्मभूपालेन-अहो न लभतेऽयं वराकः कथमपि चारित्रधर्म्मसैन्यप्रवेशं, यतो बलिनोऽद्यापि मद्वान्धवास्तेषां चाबलत्वं यथा भवति तथा जानाम्यहं, केवलं तथा क्रियमाणे तेषां महान् शरीरापचयः, अस्माकं च शरीरादव्यतिरिक्तास्ते, अतस्तच्छरीरक्षये ममैव परमार्थतोऽसौ संपद्यते, तत् किमिदानीं करोमि ?, यदिवा प्रतिपन्नं निर्वाह्यतां यद्भवति तद्भवतु, किमनया चिन्तया ?, यतः—' देहेऽपि जनितदाहं सिन्धुर्वडवानलं शशी शशकम्। न त्यजति कलङ्ककरं प्रतिपन्नपरा हि सत्पुरुषाः ॥ १ ॥ उपकृतिरामसिकतया क्षितिमपि न गणन्ति नात्मनोऽगुणिताम्। जनयन्ति हि प्रकाशं दीपदशाः स्वाङ्गदाहेन ॥ २ ॥ यदपि चारित्रधर्माद्याः ममापि क्षयायैव यतन्त इति किं तेषां परमवैरिणामुपकृतेनेत्येतदप्यचिन्त्यं, यतः—" उपकारिणि वीतमत्सरे वा, सदयत्वं यदि तत्र कोऽतिरेकः ?। अहिते सहसाऽपराधलब्धे, सघृणं यस्य मनः सतां स धुर्यः ॥ १ ॥ अपास्य लक्ष्मीहरणोत्थवैरितामचिन्तयित्वा च तदद्रिमर्दनम्। ददौ निवासं हरये महार्णवो, विमत्सरा धीरधियां हि वृत्तयः ॥१॥ यदिवा मदीयं शुभपक्षं सदैव ते पोषयन्ति सविस्तरं चासत्प्रसिद्धम्, अन्यथा नामापि को ममाज्ञास्यत् ?, प्रसिद्ध्यर्थिनश्च पुरुषाः किमिह तद्यन्न सहन्ते, यतः—तमसाऽनिशं शशाङ्को गगनं न त्यजति खण्ड्यमानोऽपि। क्वैतावती प्रसिद्धिर्यस्मादन्यत्र परिवसताम् ? ॥ १ ॥" इत्यादि विचिन्त्य विजयवर्द्धननगरे सुलसश्रेष्ठिनः पुत्रतयोत्पादितः कदाचिदसौ संसारिजीवः

कर्म्ममहाराजेन, स्थापितं च तस्य नन्दन इति नाम, प्राप्तश्च यौवनं, ततः परिणामेन निकटीभूय प्रच्छन्नमेव समये समर्पितोऽस्य यथाप्रवृत्तकरणनामा खड्गः, निवेदितं च कर्णे–खण्डयामुना खड्गेनात्मवैरिणो मोहराजस्य किंचिन्न्यूनमेकसप्ततितमं भागं विहाय शेषान् सातिरेकैकोनसप्ततिदेहभागान्, तथा ज्ञानावरणदर्शनावरणवेदनीयान्तरायसामन्तानामपि किंचिन्न्यूनमेकं त्रिंशत्तमं भागं धृत्वा छिन्द्धि शेषान् सातिरेकैकोनत्रिंशच्छरीरांशान्, एवं नामगोत्रशत्रुद्वयस्यापि किंचिन्न्यूनं विंशतितमं भागं परिहृत्य परिहृत्य कर्त्तय शेषानेकोनविंशतितनुविभागानतिरिक्तान्, तत एतैरित्थं खण्डयित्वाऽधरतामुपनीतैः समस्तमपि तत्सैन्यं खण्डितमधरितं च भविष्यति, ततो निराकुलो द्रक्ष्यसि त्वं सकलसुखसंदोहनिबन्धनसम्यग्दर्शनमहामात्यभवनद्वारं, तच्च निबिडरागद्वेषग्रन्थिपरिणतिरूपग्रन्थिकपाटपिहितं वर्त्तते, तदुद्घाटने चोपायं पुनरपि कथयिष्यामि, यथोपदिष्टं कुर्विदानीं तावत्, ततः कृतमनेन तथैव, समानीतौ च कर्म्मभूपतिना तत्पुरद्वारवर्त्तिनि सहस्राम्रवनोद्याने सद्गुरुसदागमौ, नीतस्तदन्तिकं नन्दनो, दत्ता च तस्य सहायिनी दक्षता, तद्भयाच्च प्रपलायिता शून्यता, इतश्च मूर्च्छिते मोहराजे रुदत्सु ज्ञानावरणादिसामन्तेषु समाक्रन्दतोर्नामगोत्रयोर्विलपति रागकेसरिप्रमुखसमस्तसैन्ये कथंकथमप्यात्मानं सन्धार्य तदा समुत्थितो मिथ्यादर्शनमहत्तमः, समवलोकितं च तत्तदवस्थं समग्रमपि सैन्यं, ततश्चापादमस्तकमेव भृतोऽमर्षस्याश्रद्धाननामकं महादुष्टचूर्णं गृहीत्वा धावितः, सत्वरं प्राप्तो नन्दनसमीपे, सद्गुरुसदागमाभ्यां च शुद्धश्रुतिमुखेन कथिताः सम्यग्दर्शनस्य सर्वेऽपि मोहमिथ्यादर्शनादिदोषाः, निवेदिताः अशेषा अपि धर्म्मदेशनादिगुणाः, ज्ञापिताश्च धर्म्मफलभूताः स्वर्गापवर्गादयः, प्ररूपिताः पापकार्यरूपा नरकादयः, ततो दक्षताप्रभावादवगतं सर्वमपि तत् नन्दनेन, अत्रान्तरे झगित्येव दत्तो मिथ्या-

दर्शनेन तस्याश्रद्धाननामको महादुष्टश्चूर्णः, तद्भावितेन च चिन्तितं नन्दनेन—अहो क ते मोहमिथ्यादर्शनादयः क चामी वर्त्तन्ते चारित्रधर्मसम्यग्दर्शनादयः ? केनावलोकिताः सहैव पापेन ते नरकादयः ? कश्चागतो धर्म्मस्वर्गापवर्गादिभ्यः पश्चात् ? तदियं महासाहसरूपिणी काऽप्यमीषां वाचालतेति विचिन्त्य समीपवर्त्तिनां च शनैः कथयन् मुहुर्मुहुः सहस्ततालमुपहसत्येप, ततो रुष्टः कर्म्मपरिणामोऽस्य, तुष्टाः मोहादयः, पुनरपि पुष्टाः परिपूर्णशरीराश्च संजाताः, ततोऽतिरोपभृतैर्गले गृहीत्वाऽसौ नन्दनः सम्यग्दर्शनमहामात्यभवनद्वारान्निर्वर्त्तितस्तैः पश्चान्मुखः, कारितः पापसहस्राणि, नीतः पुनरप्येकेन्द्रियादिपु, धृतोऽनन्तं कालं, एवं क्वचिन्नरके कापि संज्ञिपञ्चेन्द्रियतिर्यङ्मनुष्येपु क्वचिद्देवेपु पूर्वोक्तविधिना मोहादीन् खण्डयित्वा समागतोऽयमनन्तवारा यथोक्तस्वरूपे सम्यग्दर्शनमहामात्यभवनद्वारे, परं काप्यश्रद्धानात् क्वचिद्रागादिवशात् कापि क्रोधादिभिः क्वचिद्विपयगृद्ध्यादिभिः समुचितमहापापस्तत्रालब्धप्रवेश एव पुनरपि पुष्टपरिपूर्णीकृतमोहादिभिस्तथैव निवर्त्तितः, स्थित एकेन्द्रियादिपु प्रतिवेलमनन्तकालं, इतश्च-अस्तिमनुष्यक्षेत्रे मलयपुरं नाम नगरं, तत्र च इन्द्रो नाम राजा, तस्य च विजया नाम भार्या, तयोः पुत्रत्वेनोत्पादितोऽसौ प्रस्तुतजन्तुः कदाचित् कर्म्मपरिणामेन, स्थापितं च तत्रास्य चित्रसेन इति नाम, गतो वृद्धिमधीताः कलाः प्राप्तो युवतिजनोमनोमोहनं प्रवरयौवनं, तत्र चान्यदा कुमरवृन्दपरिवृत्तः क्रीडन् गतोऽशोकसुन्दरं नामोद्यानं, तत्र च दर्शितौ पुनरपि कर्म्मभूपेन तौ सद्गुरुसदागमौ, तद्दर्शने च समुच्छसितविशिष्टतरवीर्यः सविशेषः कृततैक्ष्ण्येन कर्म्मभूपालाद्वाप्तपूर्वाभिहितखड्गेन पूर्वोक्तच्छेदादधिकतरं छित्त्वा मोहादिशत्रूनस्खलितो गतः सद्गुरुसदागमसमीपेऽसौ सपरिकरः कुमरः, सविनयं च प्रणम्योपविष्टः समुचितप्रदेशे, कारितश्च सदागमं भणित्वा गुरुणा तस्य श्रुतिसङ्गमः, प्रोक्तं च तत्श्रवणे विलग्य

तया, तद्यथा–भद्र ! भो ! हितबुद्धिस्त्वं, भ्रामितो भवसागरे । दुष्टमोहमहीपस्य, मिथ्यादर्शनमन्त्रिणा ॥ १ ॥ यतः कुदृष्टिगेहिन्या, सार्द्धं दुहितरं निजाम् । धर्म्मबुद्धितयाऽऽख्याप्य, प्रेषयत्येष दुष्टधीः ॥ २ ॥ ततोऽर्थतो महापापबुद्धिरेषा जगत्रये । भ्रमन्ती स्ववशान् कृत्वा, वराकान् प्राणिनोऽखिलान् ॥२॥ धर्म्मच्छलेन पापानि, कारयित्वा महान्त्यपि । पातयत्यतिरौद्रेषु, नरकेषु ततो भवे ॥ ३ ॥ अनन्ते भ्रमयत्येषा, मिथ्यादर्शनमन्त्रिणः । पितुः कुदृष्टिमातुश्च, सेवां कारयते भृशम् ॥ ४ ॥ तौ च यत् कुरुतस्तेषां, तत् किमाख्यायते तव ? । रागादिदोषनिर्मुक्तमानसेषु गुणात्मसु ॥ ५ ॥ अदेवबुद्धिं देवेषु, द्वेषभावं तथैव च । नित्यं जनयते दुष्टौ, निःस्पृहेषु दयालुषु ॥ ६ ॥ गुरुष्वगुरुबुद्धिं च, तां स्थापयतोऽगुणिष्वपि । दयादानक्षमाशीलध्यानज्ञानादिनिर्मिते ॥ ७ ॥ सद्धर्मे सर्वदा द्वेषं, भूतघातात्मके पुनः । अधर्मे पक्षपातं च, भृशं कारयतस्तथा ॥ ८ ॥ विपर्यस्ता यथा जीवाः, पापं संचिन्त्य भूरिशः । न तद्दुःखं सहन्ते यन्नैव ते तत्प्रसादतः ॥ ९ ॥ मोहादिभिस्ततः सर्वैर्वैरिभिर्मिलितैर्भृशम् । त्वमप्यनन्तकं कालमेतावन्तं कदर्थितः ॥१०॥ विशेषतोऽत्र ते वैरी, सकुटुम्बोऽपि दुष्टधीः । स मिथ्यादर्शनो मन्त्री, दुरन्तानन्तदुःखदः ॥ ११ ॥ तद्भार्यापुत्रिकाभ्यां तु, दग्धो दुःखैर्यथा पुनः । त्वं तथा कथयेत् कोऽत्र, सहस्रवदनोऽपि सन् ? ॥ १२ ॥ तद्भाषितमिति श्रुत्वा, भीतचित्तो नृपाङ्गजः । सगद्गदगिरा शान्तः, प्रणम्य गुरुमब्रवीत् ॥ १३ ॥ एतदेतावतीं वेलां, प्रभो ! तावत् पुरा क्वचित् । न विज्ञातं मया किंचिदज्ञानाहतचेतसा ॥ १४ ॥ तच्छरणविमुक्तस्य, वैरिभिस्तैर्निरर्गलम् । क्षेत्रीकृतस्य दुःखानां, किं त्राणं मे भविष्यति ? ॥१५॥ गुरुणा प्रेरिता प्राह, श्रुतिस्तं पुनरप्यतः । निवेदितं मया भद्र !, तुभ्यमेतदनन्तशः ॥ १६ ॥ परं शून्यतया क्वापि, क्वचिदप्यश्रद्धानतः । क्वापि द्वेषात् क्वचिन् मोहात्, क्वापि शाठ्यात क्वचिन्मदात्

॥१७॥ कुदृष्टिपुत्रिकागाढरागान्धेन त्वनेकशः । नीतं विफलतां सर्वं, तस्मादेव हितात्मना ॥ १८ ॥ मम वाक्यं त्वयेदानीं, श्रोतव्यं हितमात्मनः । ततो बद्धाञ्जलिर्भूत्वा, सोपयोगः शृणोत्यसौ ॥ १९ ॥ तया प्रोक्तं समस्तीह, सद्गुणामृतसागरः । चारित्रधर्मभूपालन्यस्तराज्यमहाभरः ॥ २० ॥ सम्यग्दर्शनसन्मन्त्री, सदागमसहोदरः । सद्बोधो बान्धवो ज्येष्ठः, सर्वजन्तुहितात्मकः ॥ २१ ॥ छिन्नपत्रमिवाशेषं, यन्नाम्नापि प्रकम्पते । तत् सैन्यं मोहराजस्य, समरत्द्वीर्यमद्भुतम् ॥ २२ ॥ निष्पिष्टोऽनेकधा येन, कलत्रापत्यसंयुतः । स मिथ्यादर्शनो दुष्टः, प्रतिपन्थी विशेषतः ॥ २३ ॥ धर्मप्रासादमत्पीठं, मूलं मोक्षतरोश्च यः । समग्रगुणभूपीठसमुद्धारफणीश्वरः ॥ २४ ॥ न सा समृद्धिरस्तीह, न तत् सौख्यं न तत् पदम् । यत्तुष्टो न ददात्येष, देहिनां सम्यगाश्रितः ॥ २५ ॥ तस्यास्ति दुहिता रूपसौभाग्यादिगुणैकभूः । धर्म्मबुद्धिरिति ख्याता, यथार्थाभिधया जने ॥ २६ ॥ या चित्तेऽपि धृता सद्यः, सुखयत्येव देहिनः । संगमोऽमृतवाहिन्यास्तस्या निःसीमसौख्यकृत् ॥ २७ ॥ भजन्ते जन्तवो ये तां, ते तद्दर्शितमेव हि । पश्यंति तं महात्मानं, सम्यग्दर्शनमंत्रिणम् ॥ २८ ॥ दृष्टश्च सम्भवत्यत्र, त्राणं निःशेषदेहिनाम् । मोहादिबलदुःखौघसंत्रस्तमनसां सदा ॥ २९ ॥ नैवार्थित्वं पुनर्येषां, तद्दुहित्राऽस्ति देहिनाम् । तेषां दूरे परित्राणं, पश्यन्त्यपि हि ते न तम् ॥ ३० ॥ तवाप्यस्ति तवार्थित्वं, तया सुंदर ! किंचन । दर्शयामि ततोऽहं तां, सौख्यं ते जायते ततः ॥ ३१ ॥ प्रगुणोऽहं तिष्ठाम्येष, प्रसादं प्रविधाय मे । सत्वरं दर्श्यतामत्र, सा समुत्सुकचेतसः ॥ ३२ ॥

ततो गुरुणा तस्य विशेषवतीं योग्यतामुपलभ्य सदागमश्रुतिमुखेन तावत् सविस्तरमुपवर्णितं पुनरपि मोहमहाचरटमिथ्यादर्शनकुदृष्टिकुधर्म्मबुद्ध्यादिवैगुण्यं, तावच्च निवेदिताः शुद्धधर्म्मगुणा यावदुन्मीलिता च शुद्धधर्म्मकरणबुद्धिः, ततस्तेन

संविग्नमनसा प्रोक्तं—भगवन् ! युष्मत्कृतात् सदागमश्रुतिप्रसादात् सम्पन्ना तावन्मम धर्म्मबुद्धिः, तत्प्राप्तौ च चिन्तयाम्यहं-करोमि युष्मदभिहितमेव धर्मं, परिहरामि कुदृष्टिधर्म्मबुद्ध्यादिसंसर्गं, तत् कथयत प्रसादं कृत्वा स्वधर्म्मविधानोपायविधिं, ततो गुरुणाऽभिहितं-भद्र ! भवेच्चेदस्यां धर्म्मबुद्धौ स्थिरानुगिता तर्ह्येषा एवास्मदादीन् उत्साहयति धर्म्मविधानोपायविधिकथनादिषु, तदिह शुद्धधर्मं चिकीर्षुणा तावत् प्रथममेवान्यपरिहारेण सम्यग्मनोवाक्कायैः प्रतिपत्तव्यः स्वामिभावेन सम्यग्दर्शननामामात्यो, रक्षणीयं सर्वप्रकारैर्यत्नतः तत्कालुष्यं, ततः सम्यगाराधित एष तथा प्रसीदति यथा भवति सर्वोऽप्युत्तरोत्तरगुणसंप्राप्तिः, ततश्चिन्तितं राजतनयेन—अहो महाप्रभावः कोऽप्येष सम्यग्दर्शनो, नामापि सुन्दरमस्य, केवलं कथमेष मया द्रष्टव्यः प्रत्यभिज्ञानीयो वा, इत्यादि चिन्तयति राजपुत्रेऽवसरोऽयमिति ज्ञात्वा कर्मभूपालेनार्पितस्तस्य विशुद्धतराध्यवसायस्वरूपापूर्वकरणनामको दृढस्तीक्ष्णः कुठारः, कर्णे च कथितं छन्नमेव किंचित्, ततः समुल्लसितानवाप्तपूर्ववीर्यविशेषोऽयं यथोक्तकुठारेण हठान्निविडरागद्वेषपरिणतिस्वरूपग्रन्थिनामकं महाप्रतोलीकपाटद्वयं पाटयित्वा मोहादिशत्रून् अनुसमयमेव हि निर्दयं घ्नन् प्राप्तः सम्यग्दर्शनमहामात्यशरदिन्दुधामधवलान्तरकरणनामकमहाप्रसादराजाङ्गणभूमौ, ततश्च स्वप्रतिज्ञानिर्वाहपरितुष्टकर्म्मक्षितीशेन समर्पितस्तत्रास्य विशुद्धतमाध्यवसायात्मकानिर्वृत्तिकरणनामको महावज्रदण्डः, तेन च मोहराजद्वेषगजेन्द्रपुत्रौ अनन्तानुबन्धिक्रोधमानौ तथा मोहराजाङ्गजराजकेसरिदुहितानन्तानुबन्धिनी माया तत्पुत्रश्चानन्तानुबन्धी लोभः स च मिथ्यादर्शनदुष्टामात्यः, एते पञ्चापि महाशत्रवो हन्यमाना अप्यतीव सामर्शाः प्रकृष्टदुष्टचेतसः कथमपि पृष्टिममुञ्चन्तस्तथा प्रहता विश्वसेनकुमारेण यथा चिंगिकां प्रयच्छन्तः सावशेषजीविताः प्रणश्य चित्तवृत्तिमहाटवीमध्ये क्वापि निलीना मूर्छितात्मानः स्थिता इति,

ततः प्रतिबन्धकाभावे प्रविष्टो राजसुनुरन्तरकरणनामके सम्यग्दर्शनावाससौधे, दृष्टश्च तत्रौपशमिकरूपधारी सम्यग्दर्शनमहामात्यः, ततो दवदग्धतरुरिव पुष्करावर्त्तघनवर्षेण ग्रीष्ममरुपान्थ इव महासरःसलिलसेकेन दुर्जनदुर्वचने तप्तसाधुरिव सुधारसस्यन्दिसुजनवचनप्रबन्धेन आजन्मदारिद्र्योपद्रुतमहादरिद्र इवातिप्रभूतद्रविणलाभेन शिशिरहिमपातदग्धकमलखण्ड इव मधुमाधवसम्बन्धेन चिरविप्रयुक्तातिप्रियप्रियविरहसंतप्ततत्संगमेन अनादिकालविरुद्धमोहादिमहारिपुसमूहजनितदुःखौघदग्धः शीतीभूतोऽसौ तद्दर्शनेन पीयूषप्रवाहसंपातप्रतिमेन, ततः कथितमपि पूर्वं पृच्छतस्तस्य कथितं पुनरपि गुरुणा सविस्तरं तत्स्वरूपं, प्रत्यभिज्ञापितश्च पुनः पुनरेवासौ, प्रदत्ता शिक्षा नरेन्द्रनन्दनस्य, यथा–भद्र ! यावज्जीवं ममायमेव स्वामी नान्य इति प्रतिज्ञा देवैरपि यथा न चाल्यते तथा दृढं धरणीया, प्राणेष्वपि गच्छत्सु न मोक्तव्य एवायं, शङ्काकाङ्क्षाविचिकित्सापरपापण्डिपरिचयपरपापण्डिप्रशंसापिण्डप्रदानप्रपावितरणादयश्च प्रकाराः सर्वथैवास्य कालुष्यहेतवः आत्महितैपिणा दूरतः परिहरणीयाः, अन्यथा मनागप्यस्मिन् कलुपिते पुनस्तथैव प्रौढीभवन्ति मोहादयः, ततः पूर्वापकृतानि स्मरन्तो गाढतरं प्रकुपितास्ते दशनदष्टौष्ठाः सरुपो गले गृहीत्वा समाकर्पयंति, निःशङ्का नयंति स्ववशतां, ततो विडम्बयन्ति निःशङ्काः समधिकम्, अतो रक्षणीयो वत्स ! दुष्टात्मनाममीपामीपदप्यवकाशः, ततोऽयं सम्यगाराधितः सम्यग्दर्शनमहामात्यः समये त्वद्योग्यतां विज्ञाय दर्शयिष्यति तं प्रणतजनमहावत्सलं सकलसुखसन्दोहदायकं चारित्रधर्म्ममहाचक्रवर्त्तिनं, स च निबिडभक्त्या समाराधितः स्वशरीरादप्यतिरिक्ते परमवल्लभे जगद्गौरव्ये महासाम्राज्यदायिनि प्रवरलक्षणान्विते निःशेपसौख्यखानिकल्पे समग्रगुणसर्वस्वश्रीगृहापवरिके देशविरतिसर्वविरतिनामिके दास्यति परितुष्टस्तव क्रमेण निजपुत्रिके, ते च दुराराधे अतिनिपुण-

जनरंजनीये, सर्वथा तच्चित्तकालुष्यमजनयन् सेवमानस्त्वं सुखपरम्परामनुभवन् क्रमेण प्राप्स्यसि परमैश्वर्यवर्यं निःसीमानन्त-सुखसम्पन्नमप्रतिपाति सकलत्रैलोक्योपरिवर्त्ति निर्वृत्तिपुरीपरमेश्वरत्वमिति, तदेतत् सम्यक् श्रुत्वा प्रतिपद्य च क्षणात् कृता-न्यक्षायोपशमिकसम्यक्त्वरूपस्य सम्यग्दर्शनस्य सेवको भूत्वा प्रहृष्टमनाः प्रणम्य गुरुचरणौ जगाम स्वगृहं सपरिकरो विश्व-सेनकुमारः, ततोऽसौ स्मरँस्तानि गुरुवचनानि कुर्वंश्च तदुपदिष्टविधिना सम्यग्दर्शनसेवां गमयति दिवसान्, ततः कर्म्मपरिणा-मेन चिन्तितम्—अहो निर्वाहितप्राया मयेदानीं प्रतिज्ञा विगतप्राया चिन्ता यदयं मीलितः सम्यग्दर्शनस्य, इतो ह्यूर्ध्वं यदि मद्बान्धवा गाढमस्य तापयिष्यन्ति तथाऽप्युपार्द्धपुद्गलपरावर्त्तमेवास्य संसारः, परतस्तत्सैन्यप्रौढसहायतां विहाय निर्वृत्ति-पुरीपरमेश्वरत्वलाभादिति, ततोऽन्यदा पितरि पञ्चत्वमुपगते संपन्नोऽसौ महीपालः, पालयति राज्यं । अन्यदा च निरानन्दं भग्नमत्सरं परिहृतप्रायव्यापारं निरीक्ष्य स्वपक्षं प्रकुपितो गाढममर्शं परिवहन् मोहनरेन्द्रज्येष्ठपुत्रो रागकेशरी कुदृष्टिरागरूप-मात्मनो विधाय पितरं प्रणम्य निर्गतः स्वस्थानात्, प्राप्तो विश्वसेननरेन्द्रसमीपे, तिष्ठति छिद्रमवलोकयन्, ततोऽन्यदा श्रुत्वा राज्ञः सम्यक्त्वाङ्गीकारं पूर्वपरिचिततया सामर्शः समायातो बहिरुद्याने शिक्षितानेकदुष्टविद्यामन्त्रजालो बहुकूटकपटकुशलः विश्वभूतिर्नाम त्रिदण्डी, तेन चाज्ञानतपसा विद्यामन्त्रादिकूटैश्चाक्षिप्तः समागच्छति प्रायः सर्वोऽपि नगरलोको, राजा तु सम्यक्त्वमालिन्यभयात् कदाचिदपि नागच्छति, ततो भाणितस्तेन कस्यापि पार्श्वात्—यदुत तस्य तावता पूर्वपरिचयस्यैतत पर्यवसानमापन्नं येनैकामपि वारां दर्शनमात्रमपि न क्रियते, किमेतावताऽपि विनश्यति किंचित् ?, ततः पूर्वदाक्षिण्यात्तद्वचनोप-रोधाच्च गतस्तदन्तिके राजा, दर्शितानि चानेन महाक्षेपजनकानि विद्यामन्त्रकौतुकानि, ततो निजावसरं ज्ञात्वाऽधिष्ठितो

नरपतिः कुदृष्टिरागेण, तत्सन्निधानाच्च रञ्जितोऽसौ किमपि त्रिदण्डिनः, अन्यदिने चागतस्य तस्यान्यान्यपूर्वतरकौतुकानि दर्शितानि, बध्नाति च गन्नः परिजनस्य च कण्डकानि करोति रक्षाः पूरयति च भूरिप्रत्ययान् तावच्चावत्तेन कुदृष्टिरागरूप-धारिणा रागकेशरिणा तथा वासितोऽयं नृपो यथा विरक्तः सम्यग्दर्शनस्य, वदति सकलजनसमक्षमेव—न किंचिद्विदन्त्यमी श्वेतभिक्षवः, अस्य तु भगवतस्त्रिदण्डिनः प्रत्यक्षमेव ज्ञानं सप्रत्ययमित्यादि, ततश्चिन्तितं सम्यग्दर्शनेन-अहो कुदृष्टि-रागस्नेहविषयरागरूपत्रयमध्यादाद्यरूपधारी प्राप्तो रागकेशरी, अज्ञानचरटस्तु ज्वर इव मान्द्यानां सर्वेषां द्वितीय एव वर्त्तते, किं तत्रोच्यते ?, ईदृशी चामीषां पापिष्ठानां संगतिः यत्रैकस्तत्रान्येऽपि प्रकटप्रच्छन्ना मोहक्रोधमानादयः सर्वेऽप्या-गच्छन्त्येव, तस्मान्नेत ऊर्ध्वमस्माकमेतेन सह सङ्गतिः श्रेयसीति विचिन्त्य झगित्येवादर्शनीभूतः सम्यग्दर्शनः, प्रविष्टश्च तत्क्षण एव कुतोऽपि प्रकटीभूय लब्धोदयो मिथ्यादर्शनः, तेन च कुपितेन गलग्राहं गृहीत्वा नीतोऽयमपरापरेषां मन्त्र-तन्त्रकूटविद्यादिकुशलानामज्ञानकष्टकारिणां समीपे, ततः पुनरपि धर्मव्याजेन कृतमहापापो मरणोपसंहृतश्च नीतस्तैः सर्वैरपि मोहादिशत्रुभिर्मिलित्वा तथैवायमेकेन्द्रियादिषु, भ्रमतश्च तेष्वेवातिदुःखितो भूरिकालं । ततोऽन्यदा पुनरपि कर्मभूपेन मनुजक्षेत्रे धनदश्रेष्ठिगृहे उत्पादितोऽसौ स्तुभगनामा तत्पुत्रो, यौवनाभिमुखस्य सद्गुरुसदागमसन्निधाने दर्शितः पुनरपि क्षायोपशमिकसम्यक्त्वरूपधारी सम्यग्दर्शनः, प्रपलायितास्तथैव मिथ्यादर्शनादयः, ततः कृता कियन्तिचित्कालं गुणी-ग्यनेन सम्यग्दर्शनसेवा, अन्यदा च परिणीतस्यास्य जातः पुत्रः, ततोऽवसरं विज्ञाय द्वितीयस्नेहरागरूपधारिणा पुनरप्या-गत्याधिष्ठितो रागकेशरिणाऽसौ, तत्सन्निधानाच्च मानाधिकः स्नेहोऽस्य तावन् मातरि जना( जन्या )तिगः प्रीतियोगः

पितरि समधिकः प्रतिबन्धो बन्धुषु भूरिरभिष्वङ्गो भगिनीषु जनविस्मयकरं प्रेम परिजने, किं बहुना ?, गृहसत्कं दास्यादिकमपि मानुषं यदि बहिस्तादागतो न पश्यति तदा संभ्रान्तः पृच्छति-कामुकं गतं ?, ततो बुभुक्षादीनविगणयन् तावत्तदन्वेषते यावद् दृष्टं, ततो रतिं लभते, पुत्रे तु यः प्रतिबन्धोऽस्य जातः स किमुच्यते ?, तथाहि-बालकालादप्यारभ्य गृह्णात्यमुमुत्संगे गाढमाश्लेषयति समं वक्षसा नाशिकाखेलखरण्टितं च प्रचुरमक्षिकोपगूढं चुम्बति मुहुर्मुहुस्तन्मुखं खरण्ट्यते च तल्लालामूत्रपुरीषैः संहरति तानि स्वयमेव कटीतटारोपितेन परिभ्रमति त्रिकचतुष्कचत्वरादिषु, ग्रहगृहीत इव न लक्षयति जनोपहासान्, न भुङ्क्ते दिवा लग्नस्तत्परिचेष्टासु, न शेते सम्यग्रजन्यां तत्स्वपनव्यग्रतया, बृहत्तरेऽवस्थिते तस्मिन् स्निग्धं मधुरं खाद्यं पेयं सर्वमपहृत्य भोजनात् स एव भक्षयति, पितुश्च न किंचिद्, अधीयाने च तस्मिन् व्रजति सममेवासौ लेखशालायां पाठयति तं समीपस्थितः, शरीरकारणं च यदि पुत्रस्य कथमप्युत्पद्यते तर्हि तिष्ठत्युपरि पतित एवाहर्निशं, आह्वयत्यनेकवैद्यान् योजयति विविधौषधानि आनयत्यादृतो गणकभौतिकमन्त्रतन्त्रविद्यादिवेत्तॄन् कारयति तेभ्यः कुण्टलविण्टलशतानि यावच्चाद्याप्यस्य गुणो नोत्पद्यते तावद्दैन्यमापन्नः शोचति-हता वयं, न जाने वत्सस्य किञ्चिद् भविष्यतीत्यादि, तस्मिन् मुद्गयूषादिकमकुर्वति स्वयं लंघनं याति, शयानेऽप्यहर्निशं जागर्त्येव, स्नेहमूढमानसेनामुना यौवनाभिमुखः परिणायितोऽसौ, निवेशितश्च हट्टे, शिक्षितश्च सन्निहितेन समस्ता अपि वणिक्कलाः, उपरते च धनदत्तश्रेष्ठिनि समर्पितं सर्वमप्युत्खातनिखातं सुभगेन तस्य स्वपुत्रस्य, नियोजितश्च सर्वस्मिन्नपि गृहव्यापारेऽसौ, जातश्च स्वयमकिञ्चित्करः, एवं च पुत्रपरिचेष्टामूढमनसः सुभगस्य विस्मृता देवाः न दृष्टा दर्शनमात्रेणापि गुरवो गलितानि चित्तादपि तद्वचनानि न

सुखयन्ति वदन्तः साधर्मिकाः न प्रीतिमावहन्त्युपदिशन्तः शिष्टाः वैरिणीव प्रतिभाति धर्मकथा जायते सम्यग्दर्शनना-म्नाऽप्यस्य व्यथा, ततः स्नेहरागरूपधारिणो रागकेशरिणो विज्ञाय तत्तादृशं विलसितं तं तथैवादर्शनं प्रविष्टः सकुटुम्बः सानुचरो मिथ्यादर्शनः, लब्धोदयेन चाधिष्ठितः तेन सुभगः, प्रौढताप्राप्तेन च लब्धप्रसरेण पुत्रेण कलत्रादिवचनादेकपद एव नाशयित्वा सर्वाण्यपि पूर्वोपकृतानि सर्वदैवोद्वेगकारी त्वमस्माकं सर्वानर्थमूलं न क्षणं स्थातुं ददासीत्यादि दोपजाल-मुद्भाव्य निष्काशितो गृहात् सुभगः, ततश्च मिथ्यादर्शनानुगतः सद्धर्मबुद्धिविप्रयुक्तः प्रतिगृहकवलघुंटादिकं याचमानोऽतीव दुःखितो दीनमना मनोवाक्कायार्जितभूरिपापस्तथैव नीतः एकेन्द्रियादिषु, धृतो भूरिकालम् । अन्यदा पुनरप्यानीतो मनुष्येषु जातः सिंहनामा गृहपतिपुत्रो, जाता च पुनस्तत्रापि सम्यग्दर्शनसङ्गतिः, कृता च तत्सेवा प्रभूतदिनानि, अन्यदा च यौवनभरे ज्ञात्वा तृतीयविषयरागरूपधारिणा रागकेशरिणा समधिष्ठितोऽसौ, तत्सन्निधानाच्च मूर्च्छत्यसौ मधुरगेयवेणु-वीणादिध्वनिषु रजत्यतिशयेन रमणीयरूपेषु गृध्यति सुरभिगन्धेषु लुभ्यति मधुरादिरसेषु प्रतिबध्यते कोमलकलत्रे, तत्र च यस्तस्यानुरागः स किं कथ्यते ?, तथाहि–तदनुरक्तमानसेन निष्काशितौ मातापितरौ परिहृतं दूरतो भगिन्याद्यशेष-कुटुम्बं, यदेव सा वदति तदेव सत्यं यदेव च करोति तदेव हितं शेषं सर्वमसत्यमहितं चेति मन्यमानः स्थितस्तदेकशरणः, ततो लब्धप्रसरया तद्भार्ययाऽपि निष्कासितोऽग्रेतनः सर्वोऽपि दास्यादिपरिजनः धृतश्चान्य एवात्मवशवर्त्ती, ततः सर्वत एव निराकुला सती प्रतिदिनमेव क्षालयत्यङ्गं सुगन्धसलिलैर्विलिम्पति सुरभिविलेपनैः परिदधात्युत्कृष्टानि वस्त्राणि [ ग्रं० ६००० ] भूषयति प्रसभमाभरणैः खादति यद् रोचते ददाति यस्य प्रतिभासते रमते स्वामिरुचितविटान् तथापि माया-

विनयवचनरचनाभिस्तथा रञ्जयति भर्त्तारं यथा सतीं सत्यां शुचिं शीलवतीं हितां देवतां च तामेव मन्यतेऽसौ, ततोऽन्यदिने परीक्षार्थमनया किञ्चिदलीकं दोषमुद्भाव्य प्रहतो मूर्ध्नि पार्ष्णिप्रहारैः, ततस्तस्या एव चरणमर्दनं कुर्वन् वदत्यसौ–प्रिये! अज्ञानितया (अकार्षमहं त्वया ताडितस्य) मे न मायामयमलीकं च न किंचित् प्रतिभाति, ततोऽद्यप्रभृति न किंचित्तथाविधमहं करिष्यामि, यदिवा करिष्यामि, कथमन्यथा गोशीर्षश्रीखण्डरसादप्यतिशीतलेन निजचरणप्रहारेण मां सुखयसि त्वमिति, ततस्तया चिन्तितं–दासोऽयं मम वराकः, तत् किमहं बहिर्भ्रमामि?, गृहेऽप्यानयाम्यात्माभिरुचितं, ततो द्वितीयदिने रात्रौ गृहाङ्गणे धृत्वा कञ्चित्तरुणमभीष्टपुरुषं भणितो भर्ता–स्वर्गात् पितॄणां सत्कं द्वारि मानुष्यमायातमस्ति, तच्च मयैव सार्द्धं रहसि किंचिद्वक्तुमर्हति, एतच्च भवद्भिरनापृष्टैरहं न करोमि, परगृहतप्तिवाहको हि लोकः, कल्येऽन्यत् किंचित् सम्भावयिष्यति, मत्स्वरूपं तु यादृशं तादृशं त्वमेव जानासि, तत्र किमन्येन बहुभाषितेन?, ततस्तेनोक्तं–प्रिये! नैवं वक्तुमर्हसि, किं त्वद्विषयेऽपि विकल्पः कश्चित्?, नाहमन्यैः सदृशो, यत् लोकभाषितानि चित्ते विधृत्य स्वगृहभङ्गं करोमि, तद्गच्छ त्वं, शृणु यदेतद्भाषते, तथा च कथितं भर्त्रे–सन्माननीयमिदं यथाऽस्मासु पितरः सप्रमादा भवन्ति, ततो गता सा, क्रीडितं च तेन सह स्वेच्छया, ततः कथितं भर्त्रे–प्रथमं तावद्यूयमस्माकं न भक्तिं कुरुथेत्यादिदोषानुद्भाव्य कदर्थिताऽहमित्थं तेनेति, ततः पश्चाद्भक्त्या विनयेन च तथा तन् मया परितोषितं यथा पितॄँस्तव सुप्रसन्नान् करिष्यति, अन्यैश्च बहुभिः पितृप्रयोजनैस्तन्मानुषमिहायातं तिष्ठति, ततो मया निमन्त्रितं, यावदिह स्थीयते तावद्भोजनमस्मद्गृहे कर्त्तव्यमिति, ततस्तेनोक्तं–शोभनं कृतं, भव्यरीत्या तद् भोजनीयं, ततः शालिदालिशालनकलपनश्रीघृतपूरादिभिस्तमुपपतिमेषा पोषयति रमयति च प्रत्यहं, भर्तुश्च कस्मिँश्चिद्दिने कुङ्कमारुणशुष्क-

पुष्पाणि कस्मिंश्चित्तु बीजपूरकदाडिमफलादिकं किमप्यपूर्वं वस्त्वर्पयति, वदति च सर्वास्वप्यापत्सु मया परितोपिता भक्तितः प्रतिपादिताः पितरस्तव आन्तरहस्तात् प्रयच्छन्ति, ततश्चोत्थायासौ तेभ्यो भक्तितः साष्टाङ्गं प्रणमति, शेषादिकं च शिरस्यारोपयति, यदि च कश्चित् कथयति तादृशी दुःशीला त्वद्भार्या, तदा वदति–हुं जानाम्यहम्, अत एव मम प्रियया प्रथमत एव सर्वमावेदितमिति, एवं न कस्यापि उत्तरं ददाति, ततोऽन्यदिनेऽतिपरतप्तिवाहकेनाप्युक्तोऽसौ–यस्त्वदीयगृहे नित्यमेव भुंक्ते तं दर्शयाम्यागच्छस्त्वं, ततश्च गतोऽयं, दृष्टश्चासौ स्वगृहे समुपविष्टः, ततः समागत्य सर्वमपि यथावृत्तं कथयित्वा पृष्टं–प्रिये ! किमेतत् ?, ततः प्रोक्तमनया–हुं लग्नस्त्वमपि परगृहभञ्जकजनवचनेषु ?, तर्हि मिलिष्यसि मनोरथानां ?, बहूनि सदृशानि द्रक्ष्यसि, ततो ममापि सदृशां कांचिद् दृष्ट्वा समालिङ्गन् न रक्षेस्त्वं, क्वाप्यनर्थे पतिष्यसीत्यादिभिर्निर्भर्त्स्य रुष्टमात्मानं दर्शयित्वा निषिद्धोऽसौ खिन्नस्तया भोजनाद्यर्थमागच्छन् गृहे, ततोऽन्यदिवसेऽतीव प्रधाना दुह्यमाना महिषी गृहे आसीत्, सा तया तस्य खिन्नपुरुषस्य पार्श्वादपसार्य धारिता क्वचित् गुप्तप्रदेशे, ततः सिंहेनोक्तं–प्रिये ! महिषी न दृश्यते, तया प्रोक्तं–किमहं करोमि ?, ततस्तद्व्यतिकरे आर्त्तोऽसौ सर्वत्र तामन्वेषते, यावच्च क्वापि तच्छुद्धिमपि न लभते तावदागत्य गृहे दीर्घं निःश्वस्योपविष्टो वदति–प्रिये ! गता सा, तादृशी महिषी पृथिव्यां न दृश्यते, ततस्तया प्रोक्तं–यादृशी तव पितृभक्तिस्तादृश्याऽद्यापि धनं किंचिद् गमिष्यति, ततो वेगेनोत्थाय तच्चरणयोर्विलग्य प्रोक्तमनेन–यथा त्वं वदसि तथैव तत्, कृता ह्यस्माभिर्लोकजल्पैः पितॄणामवज्ञा, तदिदानीं तथा कथंचित् तानाराधय यथा पुनः प्रसीदन्त्यस्मासु, ततः प्रकुपिताऽसौ तं भणति–गतः क्वापि सत्यपुरुषः, त्वं गच्छ परतः, इत्यादि साक्षेपं वदन्ती चरणघातैराहत्य पुनः

पुनस्तं पश्चान्मुखं क्षिपति, ततो गाढं चरणयोर्मस्तकं विनस्य स्थितेऽतिनिर्बन्धेन लग्ने तस्मिन्नभिहितमनया–आराधयिष्यामि तानहं, पुनः किं ?, करिष्यन्ति च ते तव प्रसादं, परं इतः परमपि त्वममीषां परगृहपण्डितानां लोकानां वचनानि चित्ते धारयिष्यसि ?, ततस्तेनोक्तं–नैतदिह जन्मनि भवति, किमेतावताऽपि न शिक्षितोऽहमित्यादि गाढं नियन्त्र्य कृतोऽनया प्रवरबलिः समारोपितानि सुगन्धिकुसुमानि पूजिताः पितरः समुत्क्षिप्तः सुरभिधूपः तावद्यावद्रजन्याः प्रथमयामेऽतिक्रान्ते आकार्य तं पुरुषं निवेदितं भर्त्रे !–समागतं तिष्ठति पितॄणां सत्कं मानुषं, ततस्तेनोक्तं–गच्छ, समाकर्णय तद्भाषितं, कुरु महतीं तद्भक्तिं, किं बहुना ?, यथा सर्वमेव भव्यं भवति तथा कारयितव्यं, ततो गताऽसौ, व्यवस्थितं तथैव, कथितं च प्रभाते प्रियतमाय–यद्बहुभिरुपयाचितैः प्रसादिताः पितरः, समेष्यत्यद्य कुतोऽपि महिषी, अन्यदपि करिष्यन्ति, परितुष्टश्च सिंहः, सञ्जातप्रत्ययश्च गाढतरं प्रियतमायामनुरक्तोऽसौ, उपयाचितानि च भणित्वा कारितस्तया शिरोमुण्डनादीनि, एवं तया विषयरागरूपिणा रागकेशरिणा वशीकृत्य समर्पितोऽसौ, तथा विडम्बितोऽसौ यथा सर्वमपि देवगुर्वादिकं परिहृत्य स्थितस्तदेकचित्तः, कदाचिच्च केनचिदुक्तं–भोः त्वया सम्यग्दर्शनसेवाभिग्रहः प्रतिपन्नः आसीत् स कथमिदानीं ?, ततः सिंहेन सोल्लुण्ठमभिहितं, तद्यथा–

सम्यग्दर्शनमेतस्याः, प्रियाया एव निश्चितम् । स सम्यग्दर्शनोऽन्यस्तु, कोऽपि धूर्त्तैः प्रकल्पितः ॥ १ ॥

इत्यादि वदत्यस्मिन् रागकेशरिव्याप्तिमवलोक्य गतस्तथैव सम्यग्दर्शनः, प्रविष्टो मिथ्यादर्शनः, ततो मरणोपसंहृतोऽसौ नीतस्तथैवैकेन्द्रियादिषु, धृतस्तेष्वेव भूरिकालम् । अन्यदा च जनितः पुनरपि मनुष्यक्षेत्रे जिनदासश्रेष्ठिनो दुहितृत्वेन, धृतं च तस्या जिनश्रीरिति नाम, जिनदासस्य च सबालवृद्धमपि कुटुम्बं सम्यग्दर्शनानुगतमेव, ततो जिनश्रीरपि तथैव तदनुगता संजाता, परिणीता चेयं

भोगपुरनिवासिना विमलश्रेष्ठिना, सोऽपि श्राद्ध इति तद्गृहेऽपि जिनश्रीः पालयति जिनधर्मं, वन्दते देवान्, नमस्यति गुरून्, शृणोति तदन्तिके धर्मं, जाताश्च तस्याः पुत्राः, संपन्नं च गृहनायकत्वं, परिणीतश्च तज्ज्येष्ठपुत्रो धनश्रीनामिकां सार्थवाहदुहितरं, इतश्च विज्ञप्तो द्वेषगजेन्द्रेण मोहराजः–कृतस्तावत् मम ज्येष्ठबान्धवेन रागकेशरिणा तातस्य मनःपरितोषः, इदानीं तु ममैतत् क्रमप्राप्तं तल्लघुभ्रातुरिति प्रणम्य पितरं गतः सामर्पोऽयं जिनश्रीसमीपे, तत्सन्निधानाच्च समुदितस्तस्या धनश्रीवध्वां महाद्वेषः, ततस्तया दृष्टमात्रयाऽपि ज्वलत्येषा, न जल्पति किंचित् प्राञ्जलं, न पातयति किमपि तद्भाजने, निर्निमित्तमेवाक्रोशान् प्रयच्छन्ती आहन्ति मस्तके दर्व्यादिना, दूषयति सर्वाण्यपि तत्कृतकर्म्माणि, न दापयति भिक्षुकमात्रस्यापि तद्धस्तेन भिक्षां, न ददाति करेणापि स्प्रष्टुं करोटिकादिकं, न प्रयच्छति क्वचिदल्पमप्यग्रं, सा च वधूः स कोऽपि नास्ति विनयो यं न करोत्यस्याः, केवलं परमभक्त्या पादौ प्रक्षालयन्तीमेतां पार्ष्णिप्रहारेणाहत्य निर्भर्त्सयति, शरीरं संवाहयन्तीं कराभ्यां निश्छोटयति, परिवेषणाद्यर्थं पुनरासन्नमपि तिष्ठन्तीं तिरस्करोति. मा क्वचिदस्याः किमप्यग्रं भविष्यतीति क्षणमपि न परित्यजति गृहं, न वन्दते देवान्, न पश्यति गुरून्, न चिन्तयति मनसाऽपि धर्मं, केवलं पूर्वमपि कदाचिद् भग्नं पिधानादिकमपि स्मृत्वा अभूतं वा कमप्यपराधमुद्भाव्य प्रतिजनमावेदयन्ती तामेव च शुद्धसद्भावां वधूमाक्रोशन्ती निरन्तरमेव द्वेषदहनेनान्तः प्रज्वलन्ती तिष्ठतीति, ततो ज्ञातमेतत् समस्तमपि तत्स्वरूपं निःशेषपरिजनान्वितेन विमलश्रेष्ठिना समस्तनगरेण च, ततो यदि कोऽपि किंचित् शिक्षयति तदा तदुपर्यधिकतरं रुष्यति, बहुतरं च द्वेषाग्निना जाज्वलती तावद्यावत् परिहृता सर्वेणापि सम्यग्दर्शनेन च, ततोऽधिष्ठिता निःशङ्कमेव मिथ्यादर्शनेन शेषमोहबलेन च, अन्यदा च द्वेषमयतामेव प्राप्तायां

तस्यामागतः कोऽपि महार्द्धिकः शिष्टो विमलश्रेष्ठिनः पार्श्वे, दृष्टा च तेन तद्गृहोपविष्टेन मौनमाश्रितां वधूं गाढमाक्रोशन्ती जिनश्रीः, ततस्तेनोक्तं–महाभागे ! किं मुधैव खिद्यसे त्वमेवं ?, यतः–' सत्कं कस्य गृहमिदं ? यास्यति सह केन चेयमपि लक्ष्मीः ?। कतिपयदिनपर्यन्ते न त्वं न गृहं न चेयं श्रीः ॥ १ ॥ सुस्वभावा च प्रतिभातीयं त्वद्वधूः, तत् किं निरर्थकमेवं सन्तापयस्येतां ?, कल्येऽपि च वधूजनायत्तानि गृहाणि भविष्यन्तीत्यादौ तेनोक्ते गताऽसौ तदुपर्यपि महाद्वेषं, केवलं न किंचित्तस्य प्रभवति, ततो हले ! मायाविनि ! दुष्टे ! एष त्वया कोऽपि सङ्केतयित्वा ममोपरि समानीतः सुभाषितजल्पक इत्यादि साक्षेपं वदन्ती शाकादिच्छेदिकां तीक्ष्णलोहपालीमासन्नां गृहीत्वा प्रधाविता धनश्रीवधूपरि सा महादुष्टा, ततो गृहीत्वा पातिताऽधस्तादेषा, समुपविष्टा हृदयस्योपरि तज्जिघांसया, ततो हाहारवं कुर्वन् धावितः सर्वोऽपि परिजनः, ततस्तमपि प्रद्विष्टा प्रहर्तुमारब्धा जिनश्रीः, तामपि पार्ष्णिलेष्टुलगुडादिना प्रहर्तुमारब्धः परिजनस्तावद्यावन् मारिता तया वधूः, सापि समस्तपरिजनेन, एतच्चासमञ्जसमवलोक्य सकुटुम्बः प्रव्रजितो विमलश्रेष्ठी, जिनश्रीजीवश्च नरकं गत्वा पुनर्मत्स्यैकेन्द्रियादिष्वतिदुःखितो भ्रान्तः प्रभूतकालम् । अन्यदा च जातो मनुष्येषु ज्वलनशिखनामा विप्रः श्रीमान्, ततः साधुश्रावकसंसर्गात् कुतश्चिज्जातः तत्रापि सम्यक्त्वलाभः, पालितश्च प्रभूतदिनानि जिनधर्मः, अन्यदा च प्रेषिता मोहराजेन तत्समीपे निर्धनता, आगता च सहैव तया स्वयमपि तत्सहचारिणी दरिद्रता, ताभ्यां च निर्भरमालिङ्गितो ज्वलनशिखः, समाश्रितः कमपि प्रत्यन्तग्रामं, ततो नास्त्यन्यो निर्वाह इति स्वयमेव हलं वाहयति, इतश्च विज्ञप्तो द्वेषगजेन्द्रः सहर्षमनन्तानुबन्धिक्रोधाभिधानेन वैश्वानरापरनाम्ना ज्येष्ठपुत्रेण–तात ! पूर्वमप्यभूवमहं ज्वलनशिखसमीपे, केवलमन्तराऽप्यागत्य स तत्र वैरी

सम्यग्दर्शनः स्थितः, तेन दूरीभूता वयं, साम्प्रतं तु तत्रावसरो वर्त्तते, तद् विश्राम्यत यूयं, ममाप्यादिशत इदानीं, स्फोरयाम्यधुनाऽहमपि स्ववीर्यं, निष्काशयामि तातप्रसादेन ततः स्थानाद् वैरिणमित्यतोऽनुज्ञातः पित्रा आगतो ज्वलनशिखसमीपे अनन्तानुबन्धी क्रोधः, तत्सन्निधानात् जातो यथार्थनामाऽसौ, ज्वलति प्राञ्जलजल्पितेऽपि, गाढं प्रकुप्यत्यनपराधेऽपि, तुच्छेऽप्यपराधे दन्तान्निःशाणयन्नुत्थाय गाढं बध्नाति, ताडयति च भार्यां, न मुञ्चति च मोचयतामपि, बालानप्यनौचित्ये ताडयति बध्नाति च, नापेक्षते च पितरं न गणयति मातरं न चिन्तयति बंधून् न पश्यति शिष्टान् न विचारयति गुरुवृद्धान्, किंतु सर्वस्याभिमुखमनिमित्तेऽपि प्रकुपित एव वैश्वानरीभूतो बद्धभ्रूकुटिराताम्रीभूतापादमस्तकशरीरः समुद्गच्छद्गुञ्जानुबिम्बारक्तलोचनः छिन्नपर्णमिव कम्पमानो विगलत्स्वेदबिन्दुरविज्ञातवक्तव्यावक्तव्यविशेषो विरूपाण्येव जल्पति, ततः प्रख्यातः सर्वत्र करचन्द्रतया कर्प्परकोऽयमिति च, अवज्ञया वाङ्मात्रेणापि तं न कोऽप्यालपति, अन्यदा च दङ्गाकुले चनकक्षेत्रे खेटयत्येष हलं, तत्र च निर्युक्तो गलिबलीवर्दो, यावच्च तरुणः पीनाङ्गोऽप्येष न चलति तावत्तीव्रवैश्वानराधिष्ठितो विप्रस्तमाहन्ति गाढं प्राजनदण्डेन, तथाप्यचलन्तं गृह्णात्याराभिः केदारयोर्जङ्घायुग्मे खुरयोः पृष्ठे पार्श्वयोरुदरे बाहुप्रदेशे स्कन्धे ग्रीवायां च, ततो जिह्वामाकृष्योपविष्टो गलितः, तथा च सति गाढतरमधिष्ठितो वैश्वानेरण द्विजदन्तशकटं बद्ध्वा मोटयति तत्पुच्छमाहन्ति चातिस्थूलैः क्षेत्रडलैस्तावद्यावत्तैर्महास्थलीभूतोऽयमनड्वान् विप्रमुक्तश्च प्राणैः, तथापि नोपशाम्यति विप्रस्य कोपवह्निः, अधिकतरं जाज्वलीति तेनासौ, ततो महाक्रोधान्धीभूतो हृदयागतसंघट्टः सर्वथा परित्यक्तः सम्यग्दर्शनैः (नादिभिः) प्राणैश्च, ततश्च मिथ्यादर्शनादिमोहबलेन गले गृहीत्वा पातितोऽसौ घोरनरकेषु, ततो भ्रमितो भवे भूरिकालं महादुःखार्दितः। अन्यदा

च सम्यग्दृष्टेर्धनञ्जयमहाराजस्य रुक्मिणीनामिकायाः परमश्राविकायाः समग्रावरोधप्रधानतद्भार्यायाः समुत्पादितोऽसौ कुबेरनामा पुत्रः, तत्रापि श्रावककुलोत्पन्नत्वादेवास्य संजाता सम्यग्दर्शनानुगतिः, अधीताश्चानेन प्रज्ञोत्कर्षाच्छीघ्रमेव कलाः, प्राप्तश्च सकलकामिनीकमनीयं यौवनभरं । इतश्चास्ति विषमवल्लीवनव्यवस्थितो धनञ्जयराजपूर्वजैरप्यसाधितो व्याघ्रनामा पल्लीपतिः, स च दुर्गावष्टम्भेन लुण्टति सदैव धनञ्जयराजसत्कपर्यन्तदेशान्, तस्मिंश्च समये बहुतरमुपद्रुतः कोऽपि देशः, ततो धावितस्तदुपरि कुबेरकुमारः, तेन च दैवयोगात् कथमपि गृहीतो, निगृहीतश्चासौ, वशीकृतं चात्मना तद्दुर्गं, ततश्चासौ गीयते गीतेषु पठ्यते पाठेषु स्तूयते बन्दिवृन्दैः श्लाघ्यते समाश्रितैः, ततो विज्ञातावसरः पितरमनुज्ञाप्य समायातस्तत्समीपे वैश्वानरसहोदरोऽनन्तानुबन्धिमानाभिधानः शैलराजापरनामा द्वेषगजेन्द्रपुत्रः, तत्सन्निधानाच्चोत्तानितहृदयः ऊर्ध्वारोपितनेत्रः स्तम्भीभूतसकलगात्रश्चायं न माति स्वसौर्यसम्मदोत्कर्षाद्देहे न भूमण्डले नापि समग्रत्रिभुवने, वदति च सकलजनसमक्षं —रण्डाप्रायैरेवास्मत्पूर्वजैः कृतं राज्यं यैरेषोऽपि वराकः साधयितुं न शकितः, अयं पुनर्धनञ्जयो वणिग्मात्रमेव, यदि कथमप्यस्य गृहे वयं नाभविष्याम तदैतावन्ति दिनान्यनेन महाचरटेन बद्धा गृहीतोऽयमभविष्यत्, ततः खादकाश्छन्दोऽनुवर्त्तिनः सन्निहिता वदन्ति—शोभनमादिष्टं कुमारेण, एवमेवैतत्, देवानामप्यगम्योऽसौ, कः कुमारदेवान् भवतो विहायान्योऽस्य ग्रहणे समर्थः?, अन्यथा हि किमेतावन्ति दिनानि केनापि सम्मुखमवलोकितुं न शकितमस्येत्यादि, तैरुत्प्रासितो गाढतरं काष्ठीभवत्यसौ, ततः स्वस्थानप्राप्तो न गतः पितुः प्रणामार्थं, न कथितं वार्तामात्रमपि, स्वयं प्रणता मातापि न प्रणता, न नमति देवेभ्योऽपि न वन्दते गुरूनपि न सन्मानयति वृद्धानपि नालपति पुरोवर्तिनो विदुषोऽपि, केवलं कृतप्रवरशृङ्गारो महाविष्टरा-

रूढः ताम्बूलपूरितगण्डूपः स्खलद्गिरा कथंचिद् भापमाणः प्रविहितैककाणाक्षो चक्रीकृतैकदृशा तृणवत्त्रिभुवनमशेपमप्यवलोकयन् निजावासप्रासादस्थ एव खिङ्गजनपरिवेष्टितस्तिष्ठति, ततोऽन्यदिने राज्ञा शिक्षां दत्त्वा प्रेपिताः प्रधानमन्त्रिणस्तत्समीपे, तैर्गत्वाऽभिहितं–कुमार! देवः समाज्ञापयति बहूनि दिनान्युत्कण्ठिता वयं, आगम्यतामत्र, क्रियतामस्माभिः सह निदर्शनमिति, ततश्च सङ्कोचितनासाग्रेणोत्क्षिप्तैकदृशा सावज्ञमभिहितमनेन–किं किल तत्र प्रयोजनं, ? किमन्येनापि केनचित् पातितोऽसौ संकटे ?, यद्येवं तर्हि वार्तां कथयत येन तद्बाधाकारिणं शक्रमपि बद्ध्वा तत्समीपे प्रेपयामि, वयं तु न कस्यापि पार्श्वे समागमिष्यामो, यदि ह्यस्माकमपि समीपे कोऽपि नागमिष्यति तर्हि तावदस्माकं न केनापि प्रयोजनं, को हि कीदृशस्य योग्यः ?, केन च किं निष्पद्यत इति ?, ततो मन्त्रिभिरुक्तं–कुमार! त्वत्सौर्यकथामात्रोच्छादितरिपुसमूहे पितृजनभक्ते च त्वयि पुत्रे प्रतपति न तावद्देवस्य कोऽपि बाधाकारी, परं नैतद् भवादृशां वक्तुं युज्यते, यत् पितुरपि पार्श्वे नाहं गच्छामि, यतः–"सौर्यं सौन्दर्यं वा विद्या लक्ष्मीर्वचस्विताऽन्यो वा। शोभां नावहति गुणो विनयालङ्कारपरिहीणः ॥ १ ॥ त्यागो गुणो गुणशतादधिको मतो मे, विद्या विभूपयति तं यदि किं ब्रवीमि ?। पर्याप्तमस्ति यदि सौर्यमपीह किन्तु, यद्यस्ति तेपु विनयः स गुणाधिराजः ॥ २ ॥ श्रुतं च कुमारेणापि शास्त्रेपु–" दुष्प्रतिकारौ मातापितरौ स्वामी गुरुश्च लोकेऽस्मिन् । तत्र गुरुरिहामुत्र च सुदुष्करतरप्रतीकारः ॥ १ ॥ इत्यग्रतोऽपि यावदेते किंचिद् भणिष्यन्ति तावच्छैलराजसंज्ञितेनोक्तं कुबेरकुमारेण–रे! दुर्विदग्धाः! स्वयमेव विदितसकलत्रैलोक्यतत्त्वस्य ममापि शिक्षाप्रदाने किल केऽत्र यूयं ?, तद् गच्छथ निजपितरमेवेत्थं शिक्षयतेत्युक्त्वा तावद्गले ग्राहितास्ते यावन्निष्काशिता द्वारेण, ततो गत्वा सर्वमप्येतैरावेदितं नरपतये, ततोऽनेन चिन्तितम्–अहो गाढमधिष्ठितः

शैलराजेन मत्पुत्रः, तत् परित्यजामि राज्यं, किमनेन यत्रैवं विडम्ब्यंते प्राणिनो मोहमहाशत्रुसैन्येनेत्यादि विचिन्त्य कारिता कुबेरकुमारराज्याभिषेकसामग्री, परं न कथितमेतस्यापि, ततोऽन्यदिने तदाकारणाय प्रेषिताः प्रधानपौराः, तैर्गत्वा प्रणम्योक्तं-कुमार ! महत् प्रयोजनं किंचिदस्ति तदागम्यतां देवस्य समीपे क्षणमेकं, ततः शैलराजसंज्ञितेनामुना मेलितास्तेऽपि मन्त्रिणां, गता विलक्षीभूताः, ततः प्रेरिता राज्ञा सामन्तास्ततो माण्डलिकास्तेऽपि तथैव कृतास्तेन, ततः प्रेषिता तन्माता, साऽपि दृष्टा तेनावज्ञया निर्भर्त्सिता च, परमपत्यस्नेहप्रेरिततयाऽनिर्विण्णया तया चरणयोर्विलग्य महता कष्टेन कथमप्यानीतोऽसौ राज्ञः समीपे, दापितं तस्य भूपालेन बृहदासनं, उपविष्टश्चोर्द्ध्वीकृतमुखो भूनमनमात्रमप्यकृत्वा तत्रासौ, ततो राज्ञा प्रोक्तं-वत्स ! बहुभ्यो देशेभ्यः त्वत्शौर्यगुणाकर्णनरञ्जितैर्नरपतिभिर्निजनिजकन्यादानार्थमेते दूताः प्रेषिताः सन्ति, तत् पूरय सर्वासामपि तासां मनोरथान् पाणिग्रहणेन, तथा प्रतिगृहाण राज्यमिदं, येन क्रियते तव महाराज्याभिषेकः, चिरपरिभुक्तभोगास्तु वयमनुसरामः पूर्वपुरुषमार्गं,समाश्रयामो भवमहाम्भोधिनिस्तारिणीं जिनदीक्षामहातरणीमिति, ततः शैलराजप्रदत्तगाढतरकर्णजापेनामुना भाल-तले भृकुटिं विधाय प्रोक्तम्-इयता निर्बन्धेनाहमत्रानीतः किलानेन प्रयोजनेन !, तदसौ दिवसो निशा वा प्रलयं न व्रजति ? यत्र वयमप्यन्येन प्रदत्तं राज्यं ग्रहीष्याम इत्यादि साक्षेपमभिधाय पार्ष्णिप्रहारेणासनमाहत्य समुत्थितो, द्वारेण निर्गच्छन् अयोग्यो-ऽयमिति सर्वथैवोपेक्षितः सर्वेण सम्यग्दर्शनेन च, ततो मिथ्यात्वशैलराजादिमोहबलमात्रसद्वितीयो निर्गतो नगराद् बहिः, प्राप्तो महाटव्यां, राजा तु तल्लघुभ्रातुर्नालाभिधानस्य राज्यभरं समर्प्य प्रव्रजितः, प्राप्तश्चाक्षेपेण निर्वृतिपुरीं, कुबेरकुमारोऽप्यटव्यां भ्राम्यन् दृष्टश्चित्रकाभिधानेन संग्रामकालनष्टेन भ्रमता तन्निहतव्याघ्रपल्लीपतिसूनुना, ततस्तेन सह लग्नमायोधनं, रौद्राध्यवसा-

गोपगतश्च मारितोऽसौ चित्रकेण, सोऽपि चेतरेण, ततः पातितो महानरकेषु कुबेरः, समानीतश्च पुनर्मत्स्यादिषु, धृतश्चातिदुःखितस्तेषु प्रभूतकालम् । ततोऽन्यदा समानीतोऽसौ महापुरनगरे, जातश्च परमश्रावकस्य यथार्थनाम्नो धनाढ्यश्रेष्ठिनः पुत्रः, दत्तं चास्य पद्म इति नाम, अधिष्ठितश्च तत्र बालकालादपि रागकेशरिपुत्रिकयाऽनन्तानुबन्धिमायाभिधानया बहुलिकाऽपरनाम्न्याऽसौ, ततस्तदुदयाद् डिम्भरूपैरपि सह क्रीडन् वञ्चयित्वा तानि गृह्णाति तत्र खाद्यादिकं, बहुलीप्रधानतया च ख्यापयत्यात्मनि साधुतां, रञ्जयत्येतानि वचनरचनया, एवं बृहत्तरीभूतोऽसौ मातरमपि वञ्चयति पितरमपि द्रुह्यति बन्धूनप्यतिसन्धयति भगिनीमपि भोलयति परिजनमपि विभ्रमयति, कला अपि अधीयमान उपाध्यायमपि धूर्त्तयति, सहाध्यायिनोऽपि वञ्चयति, गृहदेवालये देवगृहे वा नीतो मात्रादिभिः स्तौति देवानुद्दामस्तुतिभिः अन्तरमुपलभ्य भक्षयति सर्वमपि तत् पुरोवर्त्ति मोदकादिकं कक्षायां प्रक्षिपति घण्टादिकं न मन्यते च मार्यमाणोऽपि निजापराधान् गोपयत्यनेकयुक्तिभिः न पुनर्गच्छति केनापि सह सद्भावं न प्रकटयति पितुरपि स्वाभिप्रायं न जल्पति मात्रा सहाकृत्रिमं, तदेवं बहुलिकया सह प्रवर्द्धमानोऽसौ स्वजनं परजनं वा अविशेषेणावञ्चितं न कंचिन्मुञ्चतीत्यतो गाढं समुद्वेजितैः पित्रादिभिर्नीतोऽसौ सद्गुरुसमीपे, निवेदितं तेषां यद्—भगवन् ! अस्मद्गृहे गोत्रे वा ईदृशो बहुलीप्रधानः कोऽपि कदाचित् कर्म्मकरोऽपि-न बभूव, ततः प्रसादं विधाय तथा कुरुत यथाऽयमस्मत्कुलकलङ्ककारिणीं मायाशीलतां परित्यजति जिनधर्मे च प्रवर्त्तत इति, ततोऽतिधर्म्मकथाकरणनिपुणैः करुणाप्रधानैश्च गुरुभिः "मायाशीलः पुरुषो यद्यपि न करोति कञ्चिदपराधम् । सर्प्प इवाविश्वस्यो भवति तथाऽप्यात्मदोषहतः ॥ १ ॥ मायाविनश्च जीवा जायन्ते हीनकुलसमुत्थासु । स्त्रीषु नरकेषु दुःखान्यनुभवमाप्नुवन्त्यनन्तानि ॥ २ ॥ इत्यादि धर्म्मदेशना तथा कृता

यथा कर्म्मपरिणामानुकूल्येन केनचित् तत्कालं मन्दीभूताऽस्य बहुलिका निलीनो मिथ्यादर्शनः प्रकटीभूतः सम्यग्दर्शनः, स्थितश्च तत्सेवां कुर्वन् बहुदिनानि, अन्यदा च समुत्पन्नविश्वासेन पित्रा उपवेशितोऽयमात्मसमीपे सौवर्णिकहट्टे, ततः कदाचित् पोतकं तस्य समर्प्य गतो भोक्तुं धनाढ्यश्रेष्ठी, राज्ञश्चाश्वं वाहयतो गलितं हस्तात् कथमपि महामुद्रारत्नं, तच्च भूपतितं प्राप्तं केनापि समानीतं पद्मसमीपे लक्षितं च तेन राजकीयमिदं, तथाऽप्यवसरं विज्ञाय कृतपूर्वरूपया संज्ञितोऽसौ बहुलिकया-गृहाणैतत्, ततो मद्धलेन सर्वं निर्गमयेस्त्वमिति, धृतं चेतसि तद्वचनमनेन, तदनु च समायातं झगित्येव मिथ्यादर्शनादि मोहबलं, अदर्शनीभूतस्तथैव सम्यग्दर्शनः, ततो गृहीतममुना स्वल्पेन अनर्घेयमपि तन्मुद्रारत्नं, न कथितं चागतस्य पितुः, संगोप्यान्यत्रैव धृतं, ततश्च दापितो राज्ञा पटहको–यदि मुद्रारत्नमिदानीं कोऽपि समर्प्पयति तदा निर्दोषो, मया तु ज्ञातमर्प्पयन् प्राणैरेव सहार्प्पयिष्यति, ततश्चोग्राज्ञो राजा इति भीतं सकलमपि पुरं, जाता च धनाढ्यश्रेष्ठिनः प्रतिवेशिकादिभ्यः काचित्तच्छ्रुतिः, ततस्तेनैकान्ते धृत्वा पृष्टोऽसौ निजपुत्रः, तेन च बहुलीप्रधानतया कर्णौ पिधाय प्रोक्तं–आः शान्तं पापं, किमेवंविधं महासाहसं कश्चित् करोति ?, ततः पृष्टस्तथैवासौ जनन्या, ततोऽपि प्रातिवेशिकवणिग्भिस्तावद्यावद् समस्तैरपि नगरशिष्टैः, परं चिरप्ररूढजरठातिनिबिडमहावंशीमूलमिव न भेदितं केनापि तदाकूतं, ततोऽन्यदिने राजकीयमाणिक्यभाण्डागारिकेण दूरदेशायातः कोऽप्यपूर्वो निजस्वजनो महर्द्धिकवणिजारकरूपं कारयित्वा प्रेषितः पद्मपार्श्वे, धृतश्च तेनायमेकान्ते, भणितश्च यथा–सिंहलेश्वरराजेन वयं महामूल्यं मुद्रारत्नमेकमानायितास्तिष्ठामः, तद्यद्यस्ति तर्हि दर्शय, येन यद्याचसे तद्दापयामि बह्वपि मूल्यं, ततः पद्मेन चिन्तितम्-अस्य प्रदत्तं सत् सर्वथैव देशोत्तारं यास्यति, ततः शुद्धिमात्रमपि न

कश्चिद्विज्ञास्यतीति समानीय दर्शितं तत्तस्य, अत्रान्तरे समायाताः सङ्केतिता राजपुरुषाः, तैश्च धृत्वा नीतं सर्वमपि तद्राजकुले, उपलक्षितं च मुद्रारत्नं नरपतिना, निगृहीतश्च बहुविडम्बनापूर्वकं प्राणनिग्रहेण पद्मः, परभवे च प्राप्तो बहुरोगादिजुगुप्सितशुनीभावं, ततो भ्रान्तोऽतिदुःखितः प्रभूतभवम् । अन्यदा चानीतोऽसौ जयपुरनाम्नि नगरे, जातश्च श्रावककुले धनदत्तवणिक्पुत्रतया, जातं च तत्रास्य नाम सोमदत्त इति, श्रावककुलोत्पन्नत्वेनैव चास्त्यस्य सम्यग्दर्शनानुगतिः, ततोऽतिनिःस्वतया करोति मस्तकपिटिकया तैललवणादिवाणिज्यं, अतो जातं प्रभूतदिनैः किंचिद् भाण्डमूल्यं, मण्डितं ततो धान्यहट्टं, अर्जितं तत्र किंचिदन्यदपि द्रव्यं, ततः समयमवबुध्य रागकेशरिणा प्रेषितस्तत्सन्निधानेऽनन्तानुबन्धिलोभाभिधानः सागरापरनामको बहुलिकालघुभ्राता निजपुत्रः, तदुपदेशाच्च वर्द्धिता सोमदत्तस्य धनार्जनेच्छा, ततश्चापरापरवाणिज्यविधानेन जातः सहस्रपतिः, ततोऽप्यतिसोढक्लेशलक्षैः संजातो लक्षपतिः, अनुभूतानेकदुःखकोटिभिश्च सम्पन्नः कोटीध्वजः, यथा चास्य वर्द्धते विभवः तथा बद्धस्पर्द्धः सागरोऽपि, ततश्चातीव तत्प्रेरितोऽवज्ञयाऽधिक्षिपति देवान्, गाढमाराधिता अपि न कस्याप्येते रूपकमपि प्रयच्छन्ति एवं द्वेष्टि गुरून्, विघ्नमिव मन्यते तदुपदेशं, अनादृतो धर्मकृत्येषु, तत्परः पापेषु, ततः परिहृतः सम्यग्दर्शनेन, निःशङ्कमाक्रान्तश्च मिथ्यादर्शनादिमोहबलेन, ततः प्रारब्धाः पुनर्बहवो द्रविणार्जनोपायाः, प्रवर्द्धते च सह क्लेशैरसंतोषेण च प्रतिदिनं विभवस्तावद्यावन्मीलितास्तेन च बह्व्यो रत्नकोट्यः, प्राप्तश्चैश्यसम्पत्तिं, तथाऽप्यर्जितस्य पालनव्यासङ्गेनानुपात्तस्य तूपार्जनमहाकाङ्क्षया न शेते रात्रौ न भुङ्क्ते दिवा निरीक्षते निरन्तरमेव लेख्यकानि करोत्यहर्निशमेवोत्खातनिखातानि, पितरमप्युज्झति कपर्दिकार्थे, मातरमपि परित्यजति तल्लाभाशङ्कायां, न प्रतिभाति तिलतुषत्रिभागमपि याचमानः, सुखयति

कपर्दिकामपि दातुकामः, स्वदृष्ट्यवलोकितमपि तं गणितं तोलितं च महता कष्टेन वहुधाऽऽर्दितो ददाति कुटुम्बस्यापि वर्त्तनं भुङ्क्ते स्वयमप्यतिपुराणधान्यं संचयति नूतनमग्रेतनवर्षस्यार्थे न विश्वसिति हस्ताद् हस्तस्य, न समप्पर्यति प्रायः कस्यापि राशिं, अन्यदा च मातुलसुतभ्रातुरर्पितः कथमपि कोटिरत्नप्रमाणो राशिस्तल्लेख्यके च क्रियमाणे कथमपि न पूर्णाः पञ्चाट्टिकाः षट्काः कपर्दिकाः, तदर्थे च सप्ताहोरात्राण्युज्जागरकं कृत्वा कारितोऽसौ लेख्यकं मृतश्च सूचिकया, ततश्च करचण्डो महाकण्टको दग्धहस्तश्चायमिति प्रसिद्ध्या कथमपि प्रयच्छतोऽन्यस्य सर्वथा हस्तेनापि न स्पृशति कोऽपि तद्राशिं, अन्यदा च तस्मिन्नगरे कथमप्यतिमहार्थमप्यतिमहार्घं सम्पन्नं खादिरादिकाष्ठं, ततः प्रेरितोऽसौ सागरेण–किं परित्यजसि एतल्लाभमिति, स च पुत्रस्यापि न विश्वसिति, नापि तस्य प्रेषयतः कोऽपि क्वापि गच्छति, ततः सर्वस्यापि कुटुम्बस्य परिजनस्य लोकस्य च वारयतः केवलं सागरेण गाढमुत्साहितः पञ्च शतानि गन्त्रीणां गृहीत्वा गतोऽसौ महाटव्यां, कर्त्तयति कर्म्मकरेभ्यः काष्ठानि यावच्चेतश्चेतश्च कोऽपि क्वापि व्याक्षिप्तस्तावदेकाकी तरुतले समुपविष्टो दृष्टः सोमदत्तो बुभुक्षितक्रूरव्याघ्रेण, ततश्चपेटां दत्त्वा नखैर्विदार्य प्रलपन्निःशरणो भक्षितस्तेनासौ, गतश्चैकेन्द्रियादिषु, भ्रान्तस्तथैव तेषु भूरिकालं। तदेवमतिदुर्लभमवाप्य सम्यक्त्वं हारितं वराकेण क्वचिद् भवे रागोपहतेन क्वापि द्वेषवशेन क्वचिदनन्तानुबन्धिना क्रोधेन क्वापि मानेन क्वचिन् मायया क्वापि लोभेन, एवमन्येष्वपि भवेषु भ्रंशितोऽसौ सम्यक्त्वात् क्वचिच्छंकाद्यतिचारैः क्वचित् केलीकिलत्वेन क्वाप्यलीकविषयसुखासिकया क्वचिद्दुःशीलकुटुम्बदारिद्र्याद्यरतिभावेन क्वापि प्रियविप्रयोगधननाशादिशोकेन क्वापि परचक्रादिभयदौःस्थ्येन क्वचिज्जुगुप्सया क्वापि स्त्रीवेदोदयेन क्वचिद् पुरुषवेदबाधया क्वापि नपुंसकवेदविडम्बनया क्वचिद् रोगादि-

व्याधिभिः, एवं प्रत्येकमनन्तकालादन्तराऽन्तरा प्राप्तादमुष्मात् सम्यक्त्वगुणात् भ्रंशितोऽसौ मोहबलेन क्षेत्रपल्योपमासङ्ख्येयभागवर्त्तिप्रदेशराशिप्रमाणान् भवानिति। अन्यदा च समुत्पन्नोऽसौ त्रिजगत्खेटपुरे धर्म्मनाम्नः श्रेष्ठिनः सुन्दरनाम्ना पुत्रः, तत्र चान्यदा सद्गुरुसमीपे धर्मं शृण्वतोऽस्य संजातायां सम्यग्दर्शनानुगतौ कारुण्यपरिणतकर्म्मभूपालेनार्पितः कथमपि शुद्धतराध्यवसायलक्षणः करवालः, तेन च च्छिन्नः पल्योपमपृथक्त्वलक्षणः पूर्वहस्वीकृतदेहस्यांशः सुन्दरेण मोहादिरिपूणां, दूरीभूताश्च भीतभीतास्तस्याप्रत्याख्यानावरणाः कषायाः, ततः परितुष्टेन सम्यग्दर्शनामात्येन गुरुसमीप एव दर्शितश्चारित्रधर्मः महाचक्रवर्त्ती, ततो गुरुणा—'यः सेवतेऽतिभक्त्या चारित्रममुं कदाचिदल्पमपि। सोऽपि महर्द्धिकदेवो भूत्वा निर्वृतिविभुर्भवति ॥ १ ॥' इत्यादिना सविस्तरं वर्णितास्तद्गुणाः, ततः प्रतिपन्नः सुन्दरेणासौ सम्यक् स्वामिभावेन, प्रदत्ता च परितुष्टेन चारित्रभूपालेन तद्योग्यतामपेक्ष्य तावल्लघ्वी देशविरतिकन्यका, तत्सांनिध्याच्च प्रतिपन्नमनेन सङ्कल्पान्निरपराधत्रसजीवानां द्विविधं त्रिविधेन वधनिवृत्तिलक्षणमेकमेवाद्यस्थूलप्राणातिपातविरतिव्रतं, प्रत्याख्याताश्च बन्धवधच्छविच्छेदातिभारारोपणभक्तपानव्यवच्छेदरूपाः अतिचाराः, पालितं चैतद् बहूनि दिनानि, अन्यदा च व्यतीतस्तत्पिता ततोऽधिष्ठितः सुन्दर एव व्यवहारे, ततश्चावसरोऽयमिति ज्ञात्वा प्रेषितास्तत्समीपे मोहादिभिर्निस्त्रिंशता, तत्संनिधानाच्च येषामसौ कलान्तरेण द्रम्मान् प्रयच्छति तेषां कारयत्यतिगाढतया भक्तपाननिरोधादीनि, तैश्च ते बाध्यन्ते भृशं, म्रियते च कोऽपि कदाचित्, अन्यदा च विभवहीनतायां प्रतिपन्नः सुन्दरेण कथमपि राजनियोगः, तत्र च हिंसाऽपि प्रकटीभूता सहाप्रत्याख्यानावरणक्रोधादिभिः, ततस्तदुदयाद् व्रतनिरपेक्ष एव कांश्चिद्वधयति अपरान् कषादिघातैस्ताडयति अन्यान् शीतातपधारणोष्णतैलच्छण्टनादियातनादिभिः

सेधयति कांचित्तु मूलत एव घातयति, ततो विरक्तया परित्यक्तस्तया देशविरतिक्रिय(कन्य)या, क्रमायाततया च गच्छत्यसौ देवगृहे वन्दते देवान् कारयति पूजादिकं विदधाति दर्शनप्रयोजनानि वहति महान्तं तत्पक्षपातम्, एतावता न गतोऽनन्तरमेव नरकादिषु, किन्तु देशविरतिभ्रंशेन विराधितसम्यक्त्वगुणो मृतः समुत्पन्नो हीनभवनपतिदेवेषु सुन्दरः, ततश्च भ्रान्तो भूरिसंसारम् । अन्यदा चोत्पन्नोऽसौ सम्यग्दृष्टिशालिभद्रश्रेष्ठिनो माणिभद्रनामा पुत्रः, जातश्चैकोऽ(श्चेहा)पि सम्यग्दृष्टिः, प्रतिपन्नं चान्यदा देशविरतिबालिकानुरागात्तथैव कन्यागोभूमिन्यासापहारकूटसाक्षित्वकूटक्रयादिविषयबादरालीकस्य द्विविधं त्रिविधेन जल्पननिवृत्तिलक्षणं द्वितीयं स्थूलमृषावादविरतिव्रतं, प्रत्याख्याताश्च सहसाभ्याख्यानमन्त्रणकाद्युपविष्टाभिमुखज्ञाताज्ञातार्थभाषणस्वदारादिमन्त्रभेदमृषोपदेशकूटलेखकरणलक्षणाः पञ्चापि तदतिचाराः, पालितं चैतदपि प्रभूतवासरान्, अन्यदा च शालिभद्रश्रेष्ठिन्यपगते हट्टे व्यवहरतोऽस्य समीपे प्रेषिता मोहादिभिरप्रत्याख्यानावरणसागरमृषावादादयः, तदागमनेन प्रातिवेशिकसत्कं च वस्तु सुवर्णाद्यानीय लाभद्वयमारोप्य ग्राहकस्य ददाति, आत्मीयं च बहिरागतस्य कस्यापि हस्ते समर्प्य बहुतरमूल्येनोद्घट्य प्रयच्छति, यदि च ग्राहकः पृच्छति–श्रेष्ठिन् ! कियता मूल्येन तिष्ठतीदं ?, ततो वक्ति–एतावता भविष्यति, ततो यदि ग्रहीताऽभिदधाति–मूलक्रयं कथय, ततो वदति–निश्चयः कथ्यते, निश्चयेनैतावता भवतां भविष्यतीदं, हंत ! त्वया कियता गृहीतमिति कथयेत्यभिहिते पुनर्जल्पति–कथं तवैतदेतावदात्मीयमप्यस्य वेच्यत इत्यादि वक्रताभिर्भोलितो मुग्धः कूटक्रयमपि सत्यं मन्यमानो लाभं दत्त्वा गच्छति, अन्यदाऽतिलब्धोदयैः सागरमृषावादैरभिहितो माणिभद्रः–किमेवमलीकानि भाषमाणः शङ्कसे त्वं ? येन फैरकैस्तानि वदसि, ननु प्रगुणेनैव न्यायेन भाषस्व बहून्ययानि

गृहाणि प्रचुरभाटकानि आपणानि दातव्याश्च वृत्तयो वणिक्पुत्राणां कर्त्तव्याश्च भोगोपभोगादयो, न च सत्ये कथिते प्रचुरलाभं दातुं शक्नोति, जल्पन्ति चान्ये वहवोऽप्यलीकानि या चैषां गतिः सा तवापि भविष्यति, यच्चैते प्रव्रजिताः किंचिज्जल्पन्ति तदपि कियत् कर्णे धारयसि त्वं ?, एते हि परगृहविक्रमादित्या निःक्षणिककर्म्माणो निर्गृहद्वाराः सुखेनैव जल्पन्ति, न जानन्ति परस्य निष्ठां, एतेषां चाभिप्रायेण मस्तकं चुम्वयित्वा सद्य एव प्रव्रजितैर्भूयते, तदेतदपि न किं करोषीति, तत एतां सागरमृषावादादिशिक्षां चेतसि परिणमय्य लग्नो निःशङ्कतया कूटकयाद्यलीकानि भाषितुं, ततो भग्नव्रत इति परिहृतो देशविरत्या, गच्छति च देवगृहादिषु कारयति च पूजादिकं, शिक्षितश्च गुरुमातृवन्धुशिष्टादिना करोति सागरमृषावादाद्युपदिष्टानि वष्टोत्तराणि, ततो विराधितसम्यक्त्वो मृत्वा समुत्पन्नो हीनव्यन्तरेषु, जातश्च सर्वथा तत्रानादेयो, निर्गतश्च स्वस्थानाद् भ्रमत्यशुभप्रदेशेषु, ततोऽप्युद्धृतोऽत्र जातः क्वचित् सर्वथा मूकः क्वापि स्वलद्वचनः क्वचित् कुथितमुखगन्धः क्वापि कण्ठतालुजिह्वादशनौष्ठादिवदनरोगी क्वचित्तु कलत्रपुत्रादीनामप्यग्राह्यवचनो भूत्वा गतो नरकेषु, तिर्यक्षु चातिदुःखितो भ्रान्तः प्रभूतकालं। अन्यदा च समुत्पन्नोऽसौ श्रावकवणिजः सोमनामा पुत्रः, प्रतिपन्नं च तत्तथैव धनधान्यसुवर्णरजतवस्त्रतृणेन्धनादिवादरवस्तुनामदत्तानां द्विविधं त्रिविधेन ग्रहणनिर्वृत्तिलक्षणं तृतीयं स्थूलादत्तादानविरतिव्रतं, प्रत्याख्याताश्च तस्करप्रयोगविरुद्धराज्यातिक्रमकूटतुलाकूटमानतत्प्रतिरूपकव्यवहारलक्षणाः पञ्चापि तदतिचाराः, एतदपि प्रत्याख्यानावरणवहुलीसागरस्तेयाद्युपदेशाद् भङ्क्त्वा विराधितसम्यक्त्वो हीनदेवाद्युत्पत्तिक्रमेण तथैव भ्रान्तः सदैव द्ररिद्रादिभावेन भूरिभवं। अन्यदा च दत्तनामश्रावकजन्मनि देवतिर्यक्स्त्रीणां द्विविधं त्रिविधेन मनुष्ययोषितां त्वेकविधमेकविधेन सम्भोगनियमलक्षणं इत्वरपरिगृहीतापरिगृहीतागमना-

नङ्गक्रीडापरविवाहकरणकामतीव्राभिलापस्वरूपं पञ्चातिचारविशुद्धं प्रतिपन्नं चतुर्थं स्थूलमैथुनविरतिव्रतं, तदपि तीव्रपुरुषवेदोदयमैथुनविषयाभिलापचक्षुःस्पर्शनाद्युपाधिना भङ्क्त्वा विराधितसम्यक्त्वो हीनदेवादिजन्मक्रमेण भ्रान्तो नपुंसकादिरूपतया भूरिसंसारं । अन्यदा च धनबहुलश्रावकजन्मनि क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यद्विपदचतुष्पदकुप्यवस्तुनां परिमितताकरणरूपं प्रतिपन्नं पञ्चमं स्थूलपरिग्रहविरमणव्रतं, नियमिताश्च योजनप्रदानबन्धनकारणभावैः क्षेत्रादिप्रमाणातिक्रमरूपाः पञ्चापि तदतिचाराः, एते च किंचिद्दुरवगमा इति विव्रियन्ते, तत्र क्षेत्रं वास्तु वा नियमातिरिक्तं परिजिघृक्षुरग्रेतनसन्निधानेन गृहीत्वा वृत्तिवरण्डादिमर्यादामपनीय यत्रैकत्वेन योजयति स योजनेन क्षेत्रवास्तुप्रमाणातिक्रमः १, हिरण्यं—रजतं सुवर्णं प्रतीतं तत्र चतुर्मासाद्यवधिना नियतमाने कृते तुष्टराजादेः पार्श्वाल्लब्धान्नियमे पूर्णे ग्रहीष्यामीत्यभिसन्धिना यत्रापरस्य स्वजनादेर्हस्ते दत्त्वा मुञ्चति, एवं प्रदानेन हिरण्यसुवर्णप्रमाणातिक्रमः २, धनं—गणिमादि धान्यं—व्रीह्यादि तत्र नियमितैतत्परिमाणकोऽपि नियमाधिकमिदं पूर्वलभ्यं लभमानोऽन्यदा जिघृक्षुश्चतुर्मास्यादिपरतो गृहगतधनादिविक्रये वा कृते ग्रहीष्यामीत्येवंभूतं बन्धनं—वचननियन्त्रणात्मकं मूढकादिषु बद्धा अन्यगृहादिधरणरूपं वा सत्यकार्प्पणरूपं वा यत्र करोत्येष बन्धनेन धनधान्यप्रमाणातिक्रमः ३, द्विपदं—कलत्रपुत्रदास्यादि चतुष्पदम्—अश्वादि तत्र संवत्सराद्यवधिना नियमितैतत्परिमाणस्तन्मध्येऽपि तेषां प्रसवसम्भवतो यत्र कियन्तमपि कालमतिवाह्य गर्भग्रहणं कारयति, असौ कारणेन गर्भगतं द्विपदं चतुष्पदं वा समाश्रित्य तत्प्रमाणातिक्रमः ४, कुप्यं शयनाशनकुन्तखड्गभाजनकचोलकादि, तच्च कचोलदशकादिसंख्यया कृतनियमस्तदाधिक्ये सति भञ्जयित्वा स्थूलानि कारयित्वा यत्र दशादिसंख्यां पूरयति सोऽयं भावेन—पर्यायान्तरकरणरूपेण प्रमाणातिक्रमः ५, एतदपि परिग्रहसागराद्युपाधितो भङ्क्त्वा भ्रान्तः संसारं,

दिक्परिमाणव्रतमपि कदाचित् कृत्वा भग्नं सागराद्युपदेशाद्, उपभोगव्रतमपि भ्रंशितं सागरलोलतादिभिः, अनर्थदण्डविरमणव्रतं तु नाशितं हास्याज्ञानतुच्छत्वविकथादिभिः, सामायिकदेशावकाशिकपौषधोपवासातिथिसंविभागव्रतान्यप्युच्छेदितान्यार्त्तरौद्रप्रमादकार्पण्यादिभिः, तदेवं केषुचिद्भवेष्वेकैकं व्रतं क्वापि द्वयं क्वापि त्रयं कचिच्चतुष्टयं यावत् कस्मिंश्चिद्भवे द्वादशापि प्रतिपन्नानि भग्नान्येतैर्मोहादिमहाशत्रुभिः। ततोऽन्यदा कुंडिन्यां नगर्यां परमश्रावकसुभद्रसार्थवाहस्य जातोऽसौ रोहिण्यभिधाना दुहिता, सम्पन्ना चेयमनन्यदेवता परमश्राविका, ततो वन्दते भक्त्या देवान् शृणोति गुर्वन्तिके धर्म्मं पर्य्युपास्ते साध्वीजनं, परिणीता चेयं गृहजामात्रा विमलाभिधानेन वणिक्सूनुना, ततः करोति पित्रवष्टम्भेन विशिष्टधर्मं, पठितं लक्षमधिकं स्वाध्यायस्य बुध्यते स्वनामवत् कर्म्मग्रन्थादिप्रकरणानि, प्रतिपन्नानि चानया द्वादशापि श्रावकव्रतानि, पालयति च निरतिचाराणि, ततोऽन्यदा आस्थानोपविष्टेन मोहमहाचरटेन चिन्तातुरेण निरीक्षिता दिशः, ततो मन्त्रिसामन्तादिभिरुक्तम्—आदिशतु देवः, ततो मोहनृपेणोक्तम्—असत्प्रतिपक्षवर्गे अतीव निविडीभूता दृश्यते रोहिणी, तत् कथमियमिदानीमाः ?, ततस्तैर्विहस्योक्तं—देव ! सर्वोऽपि निविडो यावद् युष्मन्मानुपमात्रस्यापि गोचरं नागच्छति, ततो मोहेनोक्तं—प्रेष्यतां तत्र कोऽपि यस्तां पराङ्मुखीं निवर्त्तयति, अतो यावत्ते कमपि निरूपयिष्यन्ति तावत् स्वयमप्युत्थाय प्रोक्तं विकथया—एप तावन् ममैव दीयतामादेशः, पश्यामि तावत्तस्याः प्रमाणं, अतः संज्ञिता सर्वैरेपा, गता च तत्समीपे स्त्रीपुरुषकथा—भक्तकथा—राजकथा—देशकथा—लक्षणैश्चतुर्भिरात्मरूपैः, प्रविष्टा च सा परमयोगिनीव तन्मुखे, ततः पितृगृहे वस्त्राच्छादनादिकं निश्चितमवाप्नोति रोहिणी, कर्म्म च मातापितृप्रसादेन न कोऽपि कारयति गृहे, ततो देवगृहं गता यां कांचिद्वार्त्ताप्रियां पश्यति उपविशति गत्वा तत्समीपे,

ततो देववन्दनां परिहृत्याभिदधाति–हला मयैतत् श्रुतमेतच्चैतच्चाघवृत्तं त्वद्गृहे, सा प्राह–नैवं, केनाप्यसंगतं तव कथितं, ततो रोहिणी प्राह–सत्या महिला त्वं ममाप्यपलपसि, सा प्राह–कथमहमलीकेत्यादि विकथयन्त्या लगति तया सह राटी, ततो विकथायोगिनीसमुत्साहिता करोति अन्यया सह राजकथा, निर्वेद्य गतायां च तस्यां प्रारभते परया सार्द्धं स्त्रीपुरुषकथां, श्वश्रूजनादिभीत्या वोत्थितायामस्यामन्यया सह विदधाति भक्तकथां, यियासौ च तस्यां प्रस्तावयति कयाचित् समं देशकथां, ततो गृहात् निर्गता प्रहरद्वयेऽपि न निवर्त्तते, एवं च प्रतिदिनं कुर्वाणा अन्यस्मिन् दिने हस्तौ योजयित्वा केनापि श्रावकेणोक्ताऽसौ–महानुभावे ! क्षणमात्रमेव तावद्देवगृहे समागम्यते, तदेतत् शुभभावैरेकाग्रैरेव नन्तुं युज्यते, किमेवं वार्त्ताः कुरुथ यूयं ?, ततो वष्टोत्तरयति–बान्धव ! किं कुर्मः ?, अन्यत्र तावत् कोऽपि कस्यचिन्न मिलति, गृहे तु कस्यापि सत्को कोऽपि न गच्छति, अतः प्रियमेलकोऽत्रैव भवति, क्षणमेकं तेन सुखदुःखमात्रं किञ्चिदुच्यत इति नासमाधानं विधेयमिति, साध्वीनां चोपाश्रये स्वाध्यायं परिहृत्यापरापरश्रावकादिभिः सह प्रारभते तथैव विकथाप्रबन्धं, गृह्णाति साधुसाध्वीश्रावकश्राविकादिदोषाननवरतं, ततो यदि साध्वी काचिच्छिक्षयति–महानुभावे ! पठितं सर्वमपि परिगलितुं लग्नं, किमनेनैहिकामुष्मिकापायकारणेन केवलं कर्म्मबन्धहेतुना विकथापरपरिवादानर्थदण्डेन ?, सर्वसम्पत्तिनिबन्धनममृतरूपं स्वाध्यायमेव विधेहि, ततो मुखमोटकं दत्त्वा प्रतिवदति–इच्छाकारेण आर्यिके ! व्रतिनामपि दूरविरुद्धौ विकथापरपरिवादौ, परं तावन्तरेणान्यमपि मुखेन वद्धेन तिष्ठन्तं न कंचित् पश्यामः, परेषां तु वयमपि सुखेनैव कथयामो, न चान्यैरिव वयं मायां कर्तुं जानीमो, यादृशं तु तिष्ठति तादृशं तु पितुरपि मतकं स्फुटमेव वदामो, यदि न प्रतिभासते तर्हि कोऽपि रुष्यतु, ततो जातेयमनर्हा वराकी सदुपदे-

ज्ञानमित्युपेक्षिता साध्वीभिः, अन्यदा च निःशङ्कीभूता गुरुसन्निधाने व्याख्यानेऽप्युपविष्टा वस्त्रेणाच्छाद्य वक्त्रं कस्याश्चित् कर्णे स्थित्वा वदति किंचिद् अन्यस्यास्त्वन्यदपरस्यास्त्वपरं, तावद्यावदरण्यमहिषीव पल्वलजलं सर्वमपि व्याख्यासभागतजनमालोड्य करोत्यन्येषामपि श्रुतिभङ्गं, ईश्वरदुहिता चेति न कोऽपि किंचिज्जल्पति, गुर्वादिना तु कदाचित् कथमपि शिक्षिता वदति–भगवन्! नाहं केनापि सह किञ्चिज्जल्पामि, परं यदि पृष्टैः केनापि किञ्चिदुत्तरं न दीयते तर्हि स्तब्धेयमिति प्रसिद्धिर्लभ्यते, तद्भयादेव यदि केनचित् सह किंचिज्जल्प्यत इति, ततो गुरुभिरप्युपेक्षिता, सर्वतो निःशङ्कीभूता गाढमधिष्ठिताऽसौ विकथया, ततस्तत्पठनाशक्तौ परिगलितं सर्वमपि पूर्वाधीतं विस्मृतस्तदर्थः न चिन्तयति व्रतानि नालोचयति तदतिचारान् प्रमाद्यति देववन्दनायां न सुखयत्यध्येतव्यं न रमति चित्तं धर्मकथायां करोत्यनादरेण किंचित् प्रतिक्रमणादिकं, अन्यदा च क्वचिदुपविष्टया तया कयाचित् समं महाविकथापरपरिवादप्रबन्धं कुर्वत्याऽत्यन्तपरवशीभूतया कोऽप्यत्रास्ति नास्तीत्यचिन्तयन्त्या प्रोक्तं सहसैव–यथैतन्नगरनरपतेरग्रमहिषी अतीव दुःशीला, जानामि चाहमेतत् सम्यगेव, यतः शोभनेन मानुषेण मम कथितमित्यादि, एतच्च तस्मिन् प्रदेशे प्रयोजनवशागतया तद्दास्या स्थिरीभूय सर्वं सम्यगाकर्ण्य निवेदितं राज्ञ्यै, तया च कथितं नरपतये, तेनाप्यानायिता रोहिणी, गतश्च तां गृहीत्वा तत्पिता सुभद्रः सार्थवाहः, ततश्चैकान्ते विधृत्य पृष्टा पार्थिवेन रोहिणी–भद्रे! कथय मम सत्यं यदाकर्णितं त्वया मत्कलत्रस्वरूपं, तया प्रोक्तं–किमेतत् ?, न मया किमप्याकर्णितं, न चाहं कस्यापि सत्कं किंचिज्जानामीत्यादि, ततो मूलत एव सर्वापलापं कुर्वतीमेतामवलोक्य राज्ञा आनायिता तत्र प्रदेशे सा दासी, कारिता संवादं, ततोऽनयाऽनेकसाभिज्ञानपूर्वकं तथाऽसौ कृता यथा रोहिणी निरुत्तरीकृता ग्रीवामध्येऽवलम्ब्य, मौन-

मास्थाय च व्यवस्थिता, ततः प्रकुपितेन राज्ञा समाहूतः सुभद्रः सार्थवाहः स्वसमीपे, कथितो दास्या मूलत एव तद्व्यतिकरः, ततोऽकाण्डनिपतितमहावज्राशनिरिव स इमां प्राह–किमिदं ?, न किंचिज्जल्पति, एकान्तेऽपि यावद्बहुप्रकारं पृष्टा न किमप्याख्याति, तावद्यदग्रतो जल्पितं सा तत्राकार्यं पृष्टा सार्थवाहेन, तयाऽभिहितं–प्रोक्तमनया तावत् कयाऽपि गत्या एतत्, परं सत्यमसत्यं वेति न जानामि, ततोऽग्रेऽपि तज्जिह्वामुत्कलत्वस्वरूपं किंचिदवबुध्यमानः सार्थवाहस्तां विसर्ज्य दुहितरं गृहीत्वा समागतो राज्ञः समीपे, ततो बाष्पजलप्लवमानलोचनस्तच्चरणयोः प्रणम्य प्रोक्तवान्–देव ! यदस्मत्कुलेऽनेकधाऽक्षिसाक्षाद्भूतमपि प्राणत्यागेऽपि नोच्यते तदनया सर्वथाऽदृष्टमश्रुतं निरर्थकं चाभिधाय कलंकं द्वितीयशशधरकलाया इव निष्कलङ्काया मत्कुलसन्ततेरानीतम्, इदं प्रथममेव महाकलङ्कं, ममैव चायं दोषो यतो लोकादेतज्जिह्वामुत्कलत्वं शृण्वताऽपि मया गृहव्याक्षेपव्यग्रतया प्रमादितया च नेयं शिक्षिता, नापि परिहृता, तस्माद् यद् रोचते तत् करोतु देवः, ततो राज्ञा प्रोक्तं–सार्थवाह ! मदीयनगरे वृद्धपुरुषस्त्वं, ममापि मान्यः सत्यवचनश्च, तेनेमां खण्डशः कृत्वा चतुष्पथे न क्षेपयामि, केवलं तथा कर्त्तव्यं यथेदानीमेवेयं मद्देशसीमां परित्यजतीत्युक्त्वा विसर्जितोऽसौ, तेनापि तत एव स्थानाद् विसर्जिता सा, ततश्चाहो सेयं श्राविका, सा चेयं देववन्दना, तदेतत् प्रतिक्रमणं, सेयं मुखवस्त्रिका, तदिदमधीतं, ईदृशश्चामीषां धर्मो यदसद्भूतानपि गृह्णद्भिः स्थीयते परतृप्तीश्च कुर्वद्भिरास्यत इत्येवं खिन्नजनादात्मानं धर्मं च खिसयंती विगुप्यमाना निर्गता रोहिणी नगरात्, ततः स्मरन्ती तं पितृविभवविस्तरं चिन्तयन्ती तानि मातुर्लालितानि तच्च परिभावयंती बन्धुजनगौरवं तां च ध्यायन्ती परिजनपूजनीयतां तं च शोचन्ती पुनः पुनरेव सद्गुरुविप्रयोगैर्मुहुर्मुहुर्मूर्च्छन्ती पतन्ती प्रतिपतन्ती ग्रामानुग्रामं भिक्षामटन्ती सुकुमारतया स्फुटितचरणत-

लशोणितप्रवाहेण महीं सिञ्चन्ती अप्रत्याख्यानावरणकषायोदयात् तद्वशगा देशविरतिगुणभ्रंशेन विराधितसम्यक्त्वा मृत्वा हीनापरिगृहीतव्यन्तरदेवीषु गत्वाऽतिदुःखभाजनं भूत्वा ततोऽप्युद्धृत्यैकेन्द्रियादिषु सर्वथा कस्मिंश्चिदाऽभावात् क्वचिच्छेदनानुभवनेन भ्रान्ता भूरिभवमिति। ततो मोहराजेन महामूढताभार्याया हस्ते तालां दत्त्वा साट्टहासेनोक्तं—दृष्टं प्रिये! यत्कृतं निविडश्राविकायाः?, तया प्रोक्तं—देव! किमिह द्रष्टव्यं?, यस्मादियं वराकी स्त्रीमानुषमात्रं, चतुर्दशगुणस्थानसोपानस्य च सिद्धिमहासौधस्य पञ्चमसोपानमात्रमेव यावदारूढा देवेन प्रतिपातिता, येऽपि अकचक्रिणामपि पूज्याः देवानामप्यक्षोभ्याः असदृशपुरुषाकाराः सिद्धिमहासौधस्यैकादशं सोपानमारूढाः पुरुषास्तेऽपि हुंकारमात्रेणैव देवेन प्रतिपातिताः, एते च देवस्य पुरतो लुठन्तः पादयोर्लग्नास्तिष्ठन्त्यनन्ताः, ततो मन्त्रिमामन्तैरेककालमेवोक्तमिति—जानाति देवी वक्तुं, एवमेवैतदिति। अन्यदा समुत्पन्नस्तज्जीवो मानुष्येषु, प्रतिपन्नस्तत्र सम्यक्त्वेन सह दानधर्माभिग्रहः, सोऽपि सर्वो मोहप्रेषितैर्दानान्तरायकार्पण्यादिभिः। ततो भ्रान्त्वा भवमन्यदा मनुष्येष्वेव प्रतिपन्नशीलधर्माभिग्रहः, सोऽपि भग्नस्तीव्रवेदोदयकुसंसर्गादिभिः, संसारं परिभ्रम्य मनुष्येष्वेव कदाचिदङ्गीकृतस्तपोऽभिग्रहः, सोऽपि लोलितो लौल्यनिःसत्त्वादिभिः, ततो भवं भ्रान्त्वा अन्यदा मनुष्येष्वेव स्वीकृतो भावनाऽभिग्रहः, सोऽपि नाशितः आर्त्तरौद्रचिन्तादिभिः। इत्येवं देशविरतिरपि क्षेत्रपल्योपमासंख्येयभागप्रदेशराशिप्रमाणेषु भवेषु प्रतिपन्ना नाशिता चाप्रत्याख्यानावरणकषायादिमहादुष्टमोहबलेनेति।

अत्रान्तरे चन्द्रमौलिपार्थिवेन विस्मयहर्षभक्तिभरपूरितमानसेन भुवनभानुकेवलिनं प्रणम्य प्रोक्तं—भगवन्! अतिदुस्तरा महादुष्टा मोहादिशत्रवो य एवमचिन्तनीयमसमतिविस्मयकरं च विडम्बयन्ति प्राणिनः, अस्य च सकलसिद्धान्तपर-

मरहस्यभूतस्याख्यानकस्य यदन्तरा किमपि प्रोच्यते तद् सङ्गतमेव, केवलं सन्देहमात्रं किंचित् पृच्छामीत्यप्रसादो न विधेयः, पूर्वं किल सम्यग्दृष्टेरुत्कृष्टोऽप्युपार्द्धपुद्गलपरावर्त्तः संसार इत्युक्तं, तत्र चास्य प्रस्तुतजीवस्य सम्यक्त्वस्पर्शना देशविरतिस्पर्शना च प्रत्येकमसंख्यातेषु भवेषु जाता तत्परिभ्रंशे चान्तरालेषु भूरिःसंसारः प्रोक्तस्तस्याश्च भूरितायाः किं मानमिति तावत् कथ्यतां, ततः केवली प्राह–क्वचित् संख्यातं क्वचिदसंख्यातं क्वचिदनन्तमपीति, उपार्द्धपुद्गलपरावर्त्तेऽपि ह्यनन्ता उत्सर्पिण्यवसर्पिण्यो भवन्ति, अनन्तस्य चानन्ता एव भेदाः, ततो महाराज! यद्यन्तरमन्तरं प्रति अनन्ता उत्सर्पिण्यवसर्पिण्यो भवन्ति तथापि न किंचित् क्षीयते, ततश्चन्द्रमौलिमहीपालेन प्रणम्योक्तं–भगवन्! महाश्चर्यमिदं, यत् सम्यक्त्वदेशविरतिगुणयोरपि प्राप्तयोरत्राप्येतावत् प्रभवन्त्यमी मोहादिशत्रवः, ततः केवलिना प्रोक्तं–महाराज! अनादिकालादारभ्य प्रभवन्त्यस्खलिता इत्थममी, अत एव सर्वेऽपि केवलिन इत्थं प्ररूपयन्ति—"सम्मत्तदेसविरया पलियस्स असंखभागमेत्ता उ। अट्ठ भवा उ चरित्ते अणंतकालं च सुयसमए ॥ १ ॥" त्ति, सम्यग्दृष्टयो देशविरताश्च प्रत्येकं क्षेत्रपल्योपमासंख्येयभागप्रदेशराशिप्रमाणान् भवान् भवंति, अष्टौ भवाँश्चारित्रसामायिकं प्राप्यते, श्रुतसामायिकं तु सम्यग्दृष्टिमिथ्यादृष्टिभावेनाविशेपितं सामान्येन द्वीन्द्रियादिषु अनन्तान् भवान् प्राप्यत इत्यर्थः, ततो राज्ञाऽभिहितं–भगवन्! कदा पुनरसौ संसारिजीवः सर्वविरतिकन्यकां परिणीय चारित्रधर्ममहाराजसैन्यसहायीभविष्यति?, ततः केवलिना प्रोक्तं–स्तोकान्तरमिदं, समाकर्णयत्ववहितो महाराजः, ततो राजा प्राह–एषोऽहमवहितः, कथयन्तु प्रसादं विधाय भगवन्तः, ततः केवलिना प्रोक्तं—

महाराज! समस्तीह मनुष्यक्षेत्रे इन्द्रपुरं नाम नगरं, समीरणो महाराजः, तस्य जयन्ती नाम भार्या, समानीत-

श्चान्यदा तद्गृहे कर्मपरिणामेनासौ संसारिजीवो, जातस्तयोः पुत्रः, कृतं चास्य अरविन्द इति नाम, अधीताः कलाः प्राप्तश्च यौवन, अवसरे च समानीतः कर्म्मभूपेन गुरुः, दृष्टश्चायमुद्याने पर्यटता अरविन्दकुमारेण, ततो गतस्तत्समीपे, सहर्षं प्रणम्योपविष्टश्च, ततः कर्म्मनृपतिना समर्पितोऽस्य शुभतमाध्यवसायलक्षणः करवालः, तेन च च्छिन्नमेतेन मोहादिशत्रूणां संख्येयसागरोपमस्थितिलक्षणं शरीरखण्डं, ततः सम्यग्दर्शनचारित्रधर्मावुपदर्श्य गुरुणा वर्णिताः सर्वविरतिकन्यागुणाः, ततः समुत्पन्नतीव्रानुरागेण निःशेषानपास्य परान् मातापित्रादिसङ्गान् समुत्सृज्य गुरुप्रदत्तवेषेण परिणीतेयं परमविभूत्याऽरविन्दकुमारेण, ततः प्रमुदितं समस्तमपि चारित्रधर्मनृपतिसैन्यं, स्थितोऽस्य सन्निधौ समानन्दितः सद्बोधः स्थिरीभूतः सम्यग्दर्शनः परिचितीभवति प्रतिदिनं सदागमः अभ्यासीभवति प्रत्युपेक्षादिक्रियाकलापः अलंक्रियते चैव प्रशमेन मण्ड्यते मार्दवेन विभूष्यते आर्जवेन संशोभ्यते संतोषेण कुरुते चासौ तपःपरिचयं प्रकर्षेण रमते संयमेन प्रयतति सत्यपक्षं भाव्यते शौचेन न मुच्यते क्षणमप्याकिञ्चन्यब्रह्मचर्यादिभिः, एवमेतेषां मिलितः सद्बोधः सदागमोत्साहितः प्रणिहन्ति प्रतिदिनमेव मोहबलं, कथं ?, समारोहयत्यप्रमादमहागन्धहस्तिनं समारोपयति शुभमनोवृत्तिधनुर्यष्टिं, तद्विनियुक्तैः प्रहरति सद्भावनामहानाराचैः, विध्यति च तैर्मर्मसु मोहमहाराजं, ताडयति हृदि मदनमहामाण्डलिकं घूर्णयति रागकेशरिणं आराटीमोंचयति द्वेषगजेन्द्रं, एवमयं चायं च तवेत्थं महाशत्रुरित्येवं सन्निहितसद्बोधसदागमाभ्यामुपलक्षापितानपरानपि वैश्वानरशैलराजबहुलीसागरहिंसामृषावादस्तेयमैथुनमूर्च्छादिरिपून् अहर्निशं सूदयन्नेषोऽन्यदा नाम्यते क्वचित् सहसैवाभिमुखोत्थितेन प्रमादरिपुदण्डाधिपेन पुनरवष्टभ्य प्रहरन्, बाध्यते क्वाप्येककालं बहुभिः समुत्थितैः क्षुत्पिपासादिपरीषहैः, स्वस्थीभूय च पुन-

युद्ध्यमानः संशयमारोप्यते क्वचिद्दिव्यमानुपतिर्यगुपसर्गसुभटैः, सदागमवचनैश्च स्थिरीभूय पुनः पराक्रमवद्धरीक्रियते गच्छतपस्विबालतरुणवृद्धसाधुस्मारणवारणप्रेरणासमुत्थसंज्वलनकपायरिपुवर्गेण, ततोऽपि प्रशममार्दवादिकृतसाहाय्यः कथमपि निर्वलितः पुनरप्युद्यच्छन् समरभूमौ कापि बहुलीक्रियते शब्दरूपरसगन्धस्पर्शलौल्याध्यवसायप्रातिपक्षैः, ततः सन्तोषेणोत्साहितः पुनर्निहन्ति शत्रुबलं, एवं जयपराजयेषु वर्त्तमानेषु यावज्जयलक्ष्मीमवाप्स्यति चारित्रधर्मसैन्यसहितोऽरविन्दसाधुस्तावद्गुरुणाऽसौ क्वचिदपराधे गाढतरं किंचित् प्रेरितोऽवसरोऽयमित्यङ्गे प्रविश्य प्रत्याख्यानावरणक्रोधमानयोद्धाभ्यां मर्माणि गृहीत्वा समापीडितः, तत्पीडावशेन च लग्नो झपितुं गुर्वभिमुखं–किमाचार्य ! मया विनाशितं ?, यदि परिभावयिष्यसि तदा नास्ति मदीयः कोऽप्यपराधः, एवमेव वदतस्तव को निवारयिता ?, अन्यच्च–किमेकमेव मां निषेधयसि ?, किं त्वद्गच्छेऽन्यः कोऽपि एवं न करोति ?, वदन्त्वेते प्रव्रजिता मया सार्द्धं यदि कोऽप्येवं न करोति, ततो यदि स्थविराः शिक्षन्ति–भो महाभाग ! राजपुत्र ! सुकुलसम्भवः त्वमिति गुर्वभिमुखं तवेत्थमवज्ञया वक्तुं न युज्यते इत्यादि, तदा मम कुलोद्घट्टनं कुर्वन्त्येते इत्यादि विपरीतमेव परिणमयति, गाढतरं च कोपाहङ्काराभ्यां गृह्यते, यावच्च गुरुणा किंचित् पुनरपि शिक्षितः चिन्तितवान्–अहो मां लग्नाः सर्वेऽपि यूयमुच्चाटयितुं, तद् गृह्णीतात्मीयं पिच्छटकमिति वेपं परिहार्य हठाद् गले गृहीत्वा नीतस्ताभ्यां प्रत्याख्यानावरणक्रोधमानसुभटाभ्यां, समर्प्पितो महाबले, सरोपैश्चैतत्सैनिकैः सर्वैरपि मिलित्वा गृहस्थवेपमात्रं किंचित् कारयित्वा प्रतिग्रामं प्रतिगृहं च धिक्कार्यमाणः परगृहेषु कुकर्म्माणि कुर्वन् भिक्षां वा परिभ्रमन् अतिदुःखितो भ्रामितः सुचिरं, ततः पर्यन्ते पापिष्ठेन भ्रष्टबुद्धिना मया तावदुभयलोकयोरप्येकान्तदुःखावहं यदाचीर्णं तत्फलमनुभवामीदमित्याद्यात्मानं निन्दन् मृत्वा समुत्पन्नो

ज्योतिष्कदेवेषु, ततोऽपि च्युत्वा भ्रान्तो भूरिभवं। अन्यदा च पुनरपि राजपुरनगरे समुत्पन्नः परमश्रावको महर्द्धिकोऽमात्यपुत्रतया, जातं च तत्र चित्रमतिरितिनाम, उपरतेषु मातापितृषु कुटुम्बे स्वपुत्रं निवेश्य संविग्नेन गृहीतं सद्गुरुसन्निधाने तत्रापि तेन व्रतं, पालितं च पूर्वोक्तविधिना मोहबलं निघ्नता प्रभूतदिनानि, पर्यन्ते च विषयसुखशीलताप्रमादेन विजितः संयमं विराध्य समुत्पन्नः सौधर्मे हीनर्द्धिकपल्योपमायुर्देवः। ततोऽपि च्युत्वा भवं परिभ्रम्य समुत्पन्नोऽन्यदा काञ्चनपुरनगरे क्षेमंकरराजसूनुर्विजयसेनो नाम पुत्रः, तत्रापि च तेन सद्गुरुसमीपे धर्म्मं श्रुत्वा मातापित्रादींश्च मोचयित्वा तथैव सर्वविरतिकन्यकापरिणयनक्रमेण गृहीता जिनदीक्षा, प्रमुदिताः स्थितास्तथैव सन्निहिताः सद्बोधसदागमादयः, प्रारब्धश्च तथैव मोहबलमहाबलेन सह महासमरः, ततः क्रमेणातिपरिचितीभूते सदागमे निविडीभूते सद्बोधे अङ्गाङ्गिभावमापन्नेऽप्रमादे स्थिरीभूते सन्तोषे समारूढोऽप्रमत्तगुणस्थानलक्षणं सप्तमं सिद्धिसौधसोपानं विजयसेनसाधुः, तत्र कर्म्मपरिणामानुकूल्येन केनचित् प्राप्तस्तेनोपशमश्रेणिमहावज्रदण्डः, ततः समुल्लसितप्रचण्डवीर्यविशेषेण तेन मस्तके समाहत्य पातिताश्चत्वारो तावदनादिकालमहावैरिणोऽनन्तानुबन्धिक्रोधमानमायालोभाः, कृताश्च भस्मपुञ्जावष्टब्धाग्निकणवन्निश्चेष्टाः, ततो मिथ्यादर्शनोऽपि विशुद्धाविशुद्धार्द्धविशुद्धरूपत्रयान्वितः तथा समाहितो यथा तथैव निश्चेष्टीभूय पतितः, ततश्च गतोऽपूर्वकरणगुणस्थानलक्षणं सिद्धिसौधस्याष्टमं सोपानं, ततोऽपि गतोऽनिवृत्तिबादरसम्परायनामकं नवमं सोपानं, तत्र चाहत्य निश्चेष्टतां नीतो नपुंसकवेदः, ततोऽपि स्त्रीवेदः, तदनन्तरं च हास्यरत्यरतिशोकभयजुगुप्साऽऽत्मकं रिपुषट्कं, ततः पुरुषवेदः, ततोऽप्रत्याख्यानप्रत्याख्यानावरणौ क्रोधौ संज्वलनक्रोधश्चाहत्य निश्चेष्टीकृतः, ततोऽप्रत्याख्यानप्रत्याख्यानावरणौ मानौ संज्वलनमानश्च, ततोऽप्रत्याख्यानप्रत्या-

ख्यानावरणे माये संज्वलनमाया च, ततोऽप्रत्याख्यानप्रत्याख्यानावरणौ लोभौ संज्वलनलोभश्च, अयं च ताड्यमानः सूक्ष्मीभूय नंष्ट्वा निलीनः सूक्ष्मसम्परायनामके दशमे सोपाने, तत्राप्यनेन पृष्ठतो गत्वाऽयमपि ताडयित्वा निष्पन्दीकृतः, तत एतैरष्टाविंशत्याऽपि कारणभूतैः कुटुम्बमानुषैः पतितैः मूलस्थूडशाखादिपाते वृक्ष इव तन्मयशरीरजीवितः पातितो निश्चेष्टीभूयं मोहराजः, तदेवमुपशमश्रेणिमहावज्रदण्डेनाहत्य सकुटुम्बे निश्चेष्टीकृते मोहमहाचरटे निराकुलीभूतः परमानन्दसुखमनुभवन्नारूढो विजयसेनसाधुरुपशान्तमोहगुणस्थानलक्षणं सिद्धिसौधस्यैकादशं महासोपानं, यावच्च तत्रासौ केवलिसमानविशुद्धचारित्रोऽनुत्तरविमानोपपातयोग्यः सकलसुरासरपूजार्हं पदं प्राप्तोऽन्तर्मुहूर्त्तं तिष्ठति तावल्लोभेन किंचित् सचेतनीभूय प्रकुपितेनात्मशरीरादप्यव्यतिरिक्तातिवल्लभा देहोपकरणादिमूर्च्छाभिधाना प्रेषिता तत्समीपे निजदुहिता, तया प्रकुपितया कारितदेहादिमूर्च्छामात्रो गले गृहीत्वा दशमसोपानादिनयनक्रमेण पश्चान्मुखस्तावत् पातितो यावत् प्रथमसोपाने नीत्वा समर्पितो महादुष्टमिथ्यादर्शनसचिवस्य, व्यावर्त्तमानस्य ते पूर्वप्रहताः सचेतनीभूय प्रकुपिता विलग्नाः सर्वेऽपि शत्रवो विजयसेनस्य पृष्ठे, ततः कारितभूरिपापो नीतोऽयमेकेन्द्रियादिषु, भ्रमितश्च नरकगत्यादिभूरिभवं । इतश्चास्ति मनुजभूमौ ब्रह्मपुरं नाम नगरं, तत्र च परमश्रावकोऽपरिमितार्द्धिनायकश्च सुनन्दो नाम समस्तपुरप्रधानश्रेष्ठी, तस्य च धन्या नाम भार्या, जातश्च तयोः संसारी जीवः पुण्डरीकनामा पुत्रः, तस्य च तत्रातिशायिनी प्रज्ञा बभूव, ततोऽधीताः स्वल्पैरेव दिवसैः समस्तकलाः, ततः कल्यमेतदध्येतव्यमित्येतावताऽसन्तुष्यन् पृच्छति कस्यापि साधोः समीपे–क्व पुनरेतासां कलानां महान् विस्तरः ?, तेनोक्तं–द्वादशाङ्गे चतुर्दशसु पूर्वेषु, ततस्तेनोक्तं–कियन्ति पुनस्तानि पूर्वाणि भवन्ति ?, साधुना प्रोक्तं–गुरूनापृच्छस्व, ततस्तेन

तेऽपि पृष्टाः, कथितश्च विस्फार्य तैः पूर्वगतो विस्तरः, ततः समुत्पन्नं पुण्डरीकस्य तदध्ययने महत् कौतुकं, भणिताश्च गुरवो-ममानुग्रहं कृत्वा पाठयत तानि पूर्वाणि, गुरुणा प्रोक्तं-गृहीतव्रता एव तानि पठन्ति, न गृहस्थाः, ततोऽनेनाभिहितं-व्रतमपि तर्हि प्रयच्छत, ततो मातापित्राद्यनुज्ञातस्य महाविभूत्या गुरुभिः प्रदत्ता तस्य दीक्षा, गृहीता च तेन प्रज्ञाप्रकर्षादक्षेपेणैव समस्तशिक्षा, अधीतानि स्वल्पैरेव दिवसैश्चतुर्दशापि पूर्वाणि ॥ ततश्चाऽऽस्थानस्थेन दीर्घं निःश्वसितं मोहचरटेन, पृष्टं च सभागतैः-किमेतद्देव !, ततो हस्ततलेन भालफलकमाहत्य प्रोक्तमनेन-हता वयं, यतः सः अस्मन्महावैरी सदागमः सर्वात्मनाऽपि संगृहीतोऽनेन संसारिजन्तुना, तदनेन कथितानि सर्वात्मनापि ज्ञास्यत्येषोऽन्योऽपि सर्वो जनोऽस्मन्मर्माणि, तत उत्पाटयिष्यन्ते सपुत्रगोत्राणामस्माकमिदानीं कन्दाः, न च तं कमपि पश्यामि य एनं विघटयिष्यति दुष्टसंयोगं, ततः सखेदं निजस्वामिनं विलोक्यालस्यवैकल्याङ्गभङ्गमुखमोटनजृम्भास्वप्नदर्शनझंखनास्मृतिभ्रंशादिनिजपरिकरान्विता वामपार्श्वादुत्थिता निद्रा, ततस्तया हस्तौ योजयित्वा प्रोक्तं-देव ! अद्यापि स्वदासीमात्रसाध्ये किमेतावान् खेदः क्रियते ?, किं कल्येऽपि स न दृष्टो देवेन गलग्राहं गृहीत्वा एकादशसोपानात् पात्यमानो मूर्छया, तदिदानीं मच्चेष्टितमपि पश्यतु किमपि देवः, ततो विहस्योक्तं मोहेन-साधु वत्से ! साधु, गच्छ त्वं, सिध्यन्तु तवापि समीहितानि, ततो गताऽसौ सपरिकरा पुण्डरीकचतुर्दशपूर्वधरसमीपे, अवतारितं च प्रथममेवालस्यं तच्छरीरे, तद्वशवर्त्तिनश्चास्य न प्रतिभाति सूत्रपरावर्त्तनं न सुखयति तदर्थचिन्ता, एवं द्वित्रेषु दिनेषु गतेषु स्थविरैः कथमपि सम्प्रेर्य बलादुपवेशितो गुणनाय, ततः प्रेषितो निद्रया निजपरिकरः, ततो व्याप्तोऽसौ जृम्भाभिर्मोटयति पृष्ठं ऊर्ध्वीकरोति बाहू भनक्त्यङ्गुलीः यक्षाविद्ध इव विक्षिपति विसंस्थुलं पादाद्यङ्गानि मोटयति बहुप्रकारैर्मुखमुंधया च गले गृहीतो

नाम्यते अग्रतः पृष्ठतः पार्श्वतः सर्वतश्च, तदेवं सर्वैर्मिलित्वा गलगृहीतस्य भणतामपि प्रयत्नतः स्थविराणां न निर्गतं तस्य वदनादक्षरं, ततो रात्रौ समाक्रान्तः स्वयमेव गाढं निद्रया, संस्तारकादिविरहेऽपि यत्र तत्र वा प्रदेशे विसंस्थुलं पतितः, काष्ठखण्डमिवाचेतनीभूतो निवादितवदनः शेते यावत् प्रभातप्रतिक्रमणेऽपि कष्टेनोत्थाप्यते, एवमन्यस्मिन् दिने स्थविरैः सन्निहितैर्भूत्वा ऊर्ध्वीकृत्य परावर्त्तयितुमारब्धः, ततश्चोंघयाऽधरीकृत्य पातयित्वा तस्य भग्ने जानुनी रगडिते कूर्प्परे स्फोटितं मस्तकं, एवं च यावन्न किंचिद्वहति तावत् तूर्ष्णीं व्यवस्थिताः स्थविराः, ततो निद्राऽतिव्याप्तौ सत्यां प्रतिक्रमणादिक्रियाकालेऽपि बहुभिर्मुखविकारैर्नानाविधैर्नेत्रभङ्गैश्चित्रैः करपादविक्षेपैर्निद्रया नर्त्यमानोऽसौ करोति सकलजनप्रेक्षणीयमात्मानं, आनयति वश्यात्मनामपि स्फुटित्वा हास्यं, जनयति विदिततत्त्वानामपि किमेतदिति महाविस्मयं, तदित्थं निद्रयाऽऽत्मवशीकृतस्यापरावर्त्तमानस्याचिन्तयतश्च छिद्रहस्तजलमिव गलत्यनवरतमेवास्य श्रुतं, विस्मरन्ति सूक्ष्मगहनार्थाः, ततो यथा यथा भ्रश्यति सूत्रं तथा तथा निराकाङ्क्षो भवन् निद्रासुखमर्थतः कालकूटादभ्यधिकमज्ञानतोऽमृतमिव मन्यमानो यथा रात्रौ तथा दिवापि निर्भरं पतितः शेते, यावद्गलितं समस्तमपि श्रुतं, ततो गुरुणा प्रोक्तं—वत्स ! पुण्डरीकमुने ! तेन तथाविधेन निजोत्साहेन श्रुताध्ययनार्थमेव व्रतं प्रतिपद्य तेन च तादृशेनोद्यमेन कष्टेन च केवलनरलोकराज्यसुरलोकाधिपत्यापवर्गसुखसन्दोहगेहं जिनप्रणीतमिदमधीत्य श्रुतरत्नं किमनर्थमेव निःशेषनारकतिर्यगधमनरदुःखनिवहैककारणे निद्रासुखलवमात्रेऽभिरतो हारयसि ?, ततो निर्धंधसीभूतो वदति—भगवन् ! कः किल निद्रारतः ?, असङ्गतं केनापि कथितं भवतां, यतः कल्येऽप्येतावदेतावच्च मया गुणितं, गुरुणा चिन्तितम्—अहो एतदपरमधिकं यत् प्रत्यक्षमप्यपह्नुते, सत्यमपि न जल्पति, ततोऽन्यदा विपघारित इव मूर्च्छित इव महताऽपि शब्देन शब्द-

मप्रयच्छन् नानाविधस्वप्नान् दिवापि पश्यन् मुखेन बहु असम्बद्धं झपन् निर्भरं शयानो गुरुभिर्बहून् शब्दान् कृत्वा प्रबोध्याभिहितः-पुण्डरीक ! त्वमेवं वदसि-नाहं स्वपिमि, तत् किमेतत् ?, स प्राह-क्व किमेतत् ?, किल सुप्तोऽहमिति भ्रान्तिर्भवतां, न त्विदानीमेवाद्यापि गुणयन्नेवासमहं, केवलं निश्चलीभूय यदाऽहं सूत्रार्थं परिभावयामि तदा सर्वेषामपि भवतां भ्रान्तिरुत्पद्यते सुप्तोऽयमिति, ततो बादरमृषाभाषीति विरक्ताः सर्वथा गुरवः सर्वसाधवश्च, प्रेर्यमाणश्चापराण्यसम्बद्धानि जल्पति, बहुतरं च द्वेषमुपगच्छतीत्युपेक्षितः सर्वैरपि, ततश्चोपर्युपरि मोहराजप्रेषितैः परापरलोके तत्समीपमुपागच्छति वैमुख्यापन्नः सर्वथा दूरीभूतः सदागमः प्रणष्टः सद्बोधः दूरादपि दूरमाश्रितश्चारित्रधर्मः विरज्य गता प्रथममेव सर्वविरतिस्तावद्यावत् प्रपलायितः सोऽपि सम्यग्दर्शनो, लब्धावकाशीभूतः प्रवृत्तो विजृम्भितुं मिथ्यादर्शन इत्येवं सर्वैरपि मिलित्वा पर्यन्तेऽपि निद्राघुरघुरके क्षिप्तो मरणोपसंहृतो नीतो निगोदैकेन्द्रियेषु । ततो भ्रमितः संसारे । इतश्च चित्तवृत्तिमहाटव्यां विवेकगिरिशैलशिखरेऽप्रमत्तकूटे जैनेन्द्रपुरनगरे निरानन्दाः प्रणष्टोत्साहा मिलिताः सर्वेऽपि चारित्रधर्मभूपालादयः, उपविष्टाश्चैकत्र प्रदेशे, वदन्ति परस्परं-पश्यताहो किमत्र विधीयते ?, मोहचरटेनानेकाभव्यदूरभव्याः सहाया लब्धास्ततो मूलादेवास्खलिताः सर्वत्रास्मत्पक्षमुच्छेदयन्तः परिभ्रमन्ति, अस्माभिस्त्वयमेक एव किल सहायो लब्धः सोऽपि तावदस्माकं को जानाति कियतोऽपि कालान्मिलितः ?, ततश्चास्माभिर्यावदसौ महता कष्टेन कथमपि गुरुगुणेषु आरोप्यतेऽस्मत्सहायतां कांचित् प्रतिपद्यते तावन्महाभागस्य पुनरपि स कोऽपि विपर्यासः समुत्तिष्ठते येन मिलति तेषामेव मोहादिमहाशत्रूणां, विडम्ब्यते च तैः तथैव बाढमतिदुःखितं, वयं तु केवलं तस्यैव सुखित्वकरणाय यतामहे, परं विपर्यस्तोऽयमेतदपि न वेत्ति, अपरं च-यत्रोपशान्तमोहचतुर्दश-

पूर्वधरादिपदेष्वप्यारोपिताः प्रतिपत्य मोहादिदुष्टानां मिलन्ति तत्र किं वयं ब्रूमः ? क याम ? इति, ततः सद्बोधेन विहस्य प्रोक्तं-किं भो ! निरर्थिकेयं भवतामार्त्तिः ?, किं नूतनमिदं किंचिद् ?, अनादिकालप्ररूढो ह्ययं व्यवहारो, यैः संसारिजीवैः अद्यापि बहुतरं भवोदधौ भ्रमितव्यं ते भवतां हितं कुर्वतामपि प्रतिपत्त्य शत्रूणां मिलन्ति, भ्रमन्त्युत्कृष्टत उपार्द्धपुद्गलपरावर्त्तमानं संसारं, वृत्तश्चानादिमता कालेनानन्तानामयं व्यवहारः, तत् कोऽत्र विस्मयो ?, न चैवं भवतां दशानामेकापि पूर्यते, अतस्तटस्थाः पश्यन्तः किं न तिष्ठथ ?, मिथ्याभिमानमात्रं चेत् किंचिदस्ति यद्यमुना सहायेन वयं शत्रुपक्षक्षयं कृत्वा कथमपि प्रकटा भवामोऽमुं च सुखिनं कुर्म्म इति, एतदपि सेत्स्यति यदाऽस्य सुखित्वप्राप्तिर्भविष्यति, यदप्युच्यते-अस्माभिरयमेक एव सहायो लब्ध इत्येतदप्यचिन्त्यं, यतो बहुसहाया अपि मोहादयो भवतां प्रसरनिरोधमात्रमेव कर्त्तुमीशते, यूयं त्वेकसहाया अपि शत्रूणां सर्वथा क्षयमेव कुरुथ इत्यतो द्रक्ष्यथ यदयमेकोऽपि करिष्यति, किमाकुला भवथ ?, ततो यावत् सर्वेऽपि वदन्ति-अहो साधु सद्बोधेनोक्तं साध्विति, तावत् कर्म्मपरिणामेनाख्यापितं तेषां-यदुत्पादितो मया मनुजक्षेत्रे पद्मस्थले नगरे सिंहविक्रमनरेन्द्रस्य कमलिनीनाम्न्यास्तद्भार्यायाश्च पुत्रो युष्मत्सहायः, कारितं चास्य सिंहरथ इति नाम, ततो भवद्भिर्महावर्द्धापनकं कारणीयं, येनात्र जन्मन्यसौ केवलं युष्मत्पक्षमेव पोपयिष्यति, सद्बोधसदागमप्रकटितेषु गुणेष्वारोहन् न केनचित् प्रतिपातयितुं शक्यते, मया ह्यस्मिन् भवेऽस्य केवलः पुण्योदय एव सहायो दत्तस्तिष्ठति, अयमपि च तमेव सर्वप्रकारैः पोषयिष्यति, न पापोदयं, ततो मनागपि न मोहादिरिपुयोग्यो भविष्यति तावद्यावन्निर्वृत्तिपुरीप्रवेश इति, एतदाकर्ण्य हृष्टाः समुत्थिताः सर्वे सम्यग्दर्शनादयो, जिनेन्द्रपुरे सर्वत्रोच्छ्राययन्ति प्रतिगृहद्वारं पद्मपिधानान् कनककुम्भान् कारयन्ति हट्टशोभां

अवलम्बयन्ति वंशाग्रेषु प्रवरवस्त्राणि सिञ्चयन्ति मृगमदघनसारोन्मिश्रश्रीखण्डरसेन राजमार्गान् दापयन्ति राशीकृतकनक-रत्नमहादानानि प्रवर्त्तयन्त्यभयदानानि वादयन्ति तूर्याणि कारयन्ति प्रेक्षणीयानि, इतश्च सिंहरथो बालकालादपि हर्षितः प्रणमति देवान् नमस्यति गुरून् गच्छति पित्रा सह जिनायतनेषु हृष्यति तेषु स्नात्राद्यवलोकनेन तुष्यति मुनिदर्शनेन आनन्द्यते तद्वचश्रवणेन आल्हाद्यते तद्दीयमानाशनादिदानसंवीक्षणेन, एवं च हृष्यति अस्य प्रतिदिनं पुण्योदयः, तत्सा-न्निध्येन चाल्पैरेव दिवसैरधीतास्तेन समस्ता अपि कलाः, जातश्च यौवनाभिमुखः, मदनातिशायि चास्य रूपं, अभिनवो-त्पन्नसुरातिरिक्तं च तस्य ललितं, तथापि न रमतेऽसौ विषयेषु न सुखयत्यस्य स्त्रीणां कथाऽपि, न वाञ्छति मनसाऽपि चैष तत्-परिणयनं, केवलं सेवते मुनीन् शृणोति तदन्तिके धर्मशास्त्राणि परिभावयति भवस्वरूपं विरज्यति प्रतिक्षणं तस्माद् अभिका-ङ्क्षत्यभीक्ष्णं मोक्षसुखानि, ततोऽन्यदा चतुर्ज्ञानकलिते गुणनिधिनामके मुनिपतौ समायाते श्रुत्वा सविशेषधर्मविस्तरं मोच-यित्वा युक्तिभिः मातापितरौ पूर्वाभिहितेनैव विधिना महाविभूत्या जग्राह सिंहरथस्तदन्तिके दीक्षां, ततः प्रहृष्टाः परिवार-यन्ति तं सर्वेऽपि चारित्रधर्मसैनिकाः, तथाहि—गाढमनुरक्ता तावत् समग्रत्रिभुवनसाम्राज्यदायिनी सर्वविरतिः क्षणमपि सन्निधानं न मुञ्चति सद्बोधः अङ्गाङ्गीभावेनागतः सम्यग्दर्शनसम्बन्धः, ततः कृतप्रशममहाकवचो दत्तसन्तोषशिरस्त्राणः सद्भा-वनासारिमध्ये प्रतिनिविष्टस्तथैवाप्रमादमहासिन्धुरं समारूढोऽष्टादशशीलाङ्गसहस्रतलवर्गिकरक्षितबलः पुरोऽव्यवस्थापितप्रति-दिनोपचीयमानपुण्योदयमहादण्डनायकः प्रतिक्षणोल्लसदसंख्येयेष्टशुभाध्यवसायपदातिपरिवृतः प्रवृत्तो योद्धुं सह मोहबलेन सिंहरथसाधुः, तत्र च विध्यत्यनवरतमेवामूढत्वाभिधाननिशितकुन्ताग्रेण मोहमहाचरटहृदयं ताडयति वक्षसि समकालमेव

ज्ञानदर्शनचारित्रसेल्लत्रयेण रागकेशरिद्विपगजेन्द्रमदनमहामाण्डलिकान् हिनस्ति सर्वभूतदयापरिणामबाणेन हिंसाध्यवसायसामन्तं चूरयति सर्वथा सत्यभाषणमुद्गरेण मृषावादचरटमस्तकं भिनत्ति शौचभल्लेन स्तेयमहादुष्टहृदयं दहति ब्रह्मचर्याग्निशस्त्रेण शलभमिव मैथुनं दलयति निरीहतामहागदया परिग्रहमहासामन्तं कीलयति क्रोधं तद्वैगुण्यचिन्तनतोमरैः भनक्ति मानाभिमानं मार्दवदण्डाभिघातेन दूरमुत्सारयति मायां ऋजुताभल्लीप्रक्षेपेण स्फोटयति लोभशिरः सन्तुष्टियष्ट्यभिघातेन गाढमवलम्ब्य सत्त्वं देहनिःसारचिन्तनादिशस्त्रैर्लीलयैव पराजयते परीषहान् अपहस्तयत्युपसर्गान्, एवं सर्वत्रास्खलितप्रतापेन मोहबलं निघ्नता तेन गमितश्चिरकालः, ततः क्षीणरीणप्रणष्टप्रायेषु शत्रुषु परितोषेणातिप्रसन्ने सम्यग्दर्शने अतिप्रहर्षेण वर्द्धिते सदागमे सम्यगाराधिते क्रियाकलापे प्रबोध्य मोहविडम्बनाभ्यो विमोचितेषु बहुषु भव्यसत्त्वेषु दीक्षितेषु प्रचुरशिष्येषु अतिपुष्टिमानीते पुण्योदये आसन्ने च विज्ञाते पर्यन्तसमये कृता द्रव्यतो भावतश्च सिंहरथसाधुना संलेखना, ततो गीतार्थतपोधनैः सह गतो बहिः पर्वतनितम्बे प्रत्युपेक्षितं तत्र विपुलं शिलातलं संस्तृतस्तत्र दर्भमयः संस्तारकः, तत्र च पर्यङ्कनिषण्णः शिरोविन्यस्तकरकुड्मलो वन्दते शक्रस्तवेन समस्ततीर्थकरांस्ततो वर्त्तमानतीर्थाधिपं ततो निजगुरून्, तदन्तिके च पूर्वं प्रत्याख्यातान्यपि प्रत्याख्यात्यष्टादश पापस्थानानि नियमयति चतुर्विधमाहारं परिहरति शरीरमात्रेऽपि प्रतिबन्धं, एवमालोचितप्रतिक्रान्तः प्रत्याख्यातसर्वाहारो दिव्यमानुषतिर्यगुपसर्गान् अधिसहमानो मासं पादपोपगमेन स्थित्वा चरमोच्छ्वासावधि परिपालितनिष्कलङ्कश्रामण्यः समाधिप्राप्तः कालं कृत्वा समुत्पन्नो महाशुक्रकल्पे सप्तदशसागरोपमायुरिन्द्रसामानिको महर्द्धिकदेवः। तत्रापि तीर्थकरादीनां समवसरणविरचननन्दीश्वराद्यष्टाह्निकाकरणादिना अतिशयेन पुण्योदयं परिपोष्य दिव्यान् महाभोगान् भुक्त्वा आयुःक्षये च्युत्वा

पूर्वविदेहे कमलाकराख्यनगरे श्रीचन्द्राख्यमहानराधिपस्य कमलाख्यायाश्च तद्भार्यायाः समुत्पन्नोऽसौ भानुनामा पुत्रः, तत्रापि सद्बोधसम्यग्दर्शनाद्यनुगतो बालकालादपि धर्मसैन्यानुगतः सदागममतिपरिचितं कृत्वा प्रागुक्तविधिनैव मोहबलं मृदयित्वा पुण्योदयमतिपुष्टिं नीत्वा प्रभूतकालमकलङ्कश्रामण्यं पालयित्वा क्षीणप्राये मोहबले तथैवानशनं कृत्वा समाधिप्राप्तः समुत्पन्नो नवमग्रैवेयकेषु । तत्राप्येकत्रिंशत्सागरोपमाण्यायुः पालयित्वा समुत्पन्नः पूर्वविदेहे एव पद्मखण्डनगरे सीमन्तकमहाराजस्येन्द्रदत्तनामा पुत्रः, तत्रापि महानरेन्द्रभोगान् भुक्त्वा तथैव श्रामण्यं गृहीत्वा बहुक्षपितप्राये मोहबले अतिपुष्टिमानीते पुण्योदये पूर्वोक्तानशनविधिनैव परमसमाधिप्राप्तः समुत्पन्नः सर्वार्थसिद्धिमहाविमाने परमर्द्धिप्राप्तोऽहमिन्द्रदेवः । इतश्चास्ति अस्मिन्नेव गन्धिलावतीविजये विलासवेषविभूतिभिः शक्रनगरीव चन्द्रपुरी नाम महानगरी, तस्यां च प्रणतानेकभूपालमौलिमसृणीकृतचरणारविन्दः शक्तिसमृद्धिसौन्दर्यादिभिः शक्र इव अकलङ्को नाम महानरेन्द्रः, तस्य च श्रीमज्जिनेन्द्रचरणयुगपङ्कजचञ्चरीकस्य चन्द्रकरावदातसम्यग्दर्शनसुदर्शननामा अग्रमहिषी, तस्याश्चान्यदा स्वप्ने रजनिविरामालोकितमुखप्रविशच्चन्द्रकरधवलपञ्चाननायाः सुरेन्द्रदत्तमुनिजीवः सर्वार्थसिद्धिविमाने त्रयस्त्रिंशत्सागरोपमाण्यायुः पालयित्वा च्युतो गर्भे समुत्पन्नः पुत्रत्वेन, ततस्तया प्रहृष्टचित्तया निवेदितः स्वप्नो नरपतये, तेनापि निमित्तपाठकानां, तैरप्युक्तं–भविष्यति देवस्य पञ्चाननपराक्रमो मन्थरमथ्यमानक्षीरनीरधिडिण्डीरपिण्डपाण्डुरयशःप्रसरधवलितदिगन्तः सकलभूमण्डलभोक्ता पुत्रः, ततः परितुष्टो राजा पारितोषिकमहादानेन परितोष्य निमित्तपाठकान् विसर्जयति, राज्ञी च परितुष्टा सुखेन वहति गर्भं, देवपूजनाभयप्रदानाद्यनेकसम्पूरितदौर्हृदा च सम्पूर्णदिवसेषु प्रशस्तवासरे रत्नपुञ्जमिव स्वप्रभाविस्तरसमु-

द्योतितसूतिगृहं प्रसूते प्रमुदितासौ पुत्रं, निवेदितं तच्च जन्महर्षोच्चालप्रधावनस्तनपीठलुठन्मुक्ताहारया चन्द्रधाराभिधानया दास्या नरपतये, दत्तं च तच्छ्रवणहृष्टेन तेन तस्यै च सप्तमकुलमपि यावन्निर्वाहकं महापारितोषिकदानं, प्रवर्त्तितं च सर्वस्यामपि नगर्यां वादितानन्दमर्दलसन्दोहं महावर्द्धापनकं दापितानि हिरण्यादिमहादानानि शून्यीकृतानि सर्वाण्यपि कारागृहाणि मुक्तानि सर्वाण्यपि वन्दीकृतजनवृन्दानि कारितानि जिनभवनेषु महापूजास्तोत्राणि, तदेवं गीतवादननर्त्तनखादनपानप्रदानादिप्रमोदेन निर्वर्त्तितप्राये पुत्रजन्ममहोत्सवे सिद्धार्थनामा ज्योतिःशास्त्रपरमरहस्यवेद्येको नरपतिना समाहूय पृष्टो यथा निवेदयत्वार्यः कुमारजन्मनक्षत्रस्य कीदृशी ग्रहावलोकनेति ?, ततस्तेनोक्तं—यदाज्ञापयति देवः, समाकर्णयत—तावदयमानन्दः संवत्सरः ऋतुः शरत्कालो मासः कार्तिकः तिथिः भद्रा द्वितीया वारे बृहस्पतिवारः नक्षत्रं तु कृत्तिका राशिः वृषः योगो धृतिः प्रशस्तग्रहनिरीक्षितं लग्नं उच्चस्थानस्थिताः सर्वे ग्रहाः ऊर्ध्वमुखा होराः एकादशस्थानस्थाः शुभदाः पापग्रहा इति, ईदृशे च राशौ जातः कुमारोऽयं देव ! तेन भविष्यति विपुलश्रीरपरिमितविक्रमादिगुणो महानरेन्द्र इति, ततो राज्ञा प्रोक्तम्—आर्य ! क एते राशयः ? के चामीषां गुणा ? इति मां ज्ञापय तावद्यदि संगतं भवति, सिद्धार्थेनोक्तं—देव ! राशयस्तावदेते द्वादश भवन्ति, तद्यथा—मेषो वृषो मिथुनः कर्कटकः सिंहः कन्या तुला वृश्चिको धनुर्मकरः कुम्भो मीन इति ॥ गुणाश्च संक्षेपतोऽमीषाममी, तद्यथा—चक्षुर्लोलो बली रोगी, धर्मार्थः कृतनिश्चयः । जलभीरुः प्रियः स्त्रीणां, कृतज्ञो राजपूजितः ॥ १ ॥ चण्डकर्म्मा मृदुश्चान्ते, प्रवासी मेषसम्भवः । अपमृत्युर्भवेत्तस्य, किलाष्टादशवत्सरे ॥ २ ॥ पञ्चविंशतिवर्षाणां, पर्यन्ते वा कथंचन । अष्टस्ताभ्यां पुनर्जीवेत् , शतमेकं म्रियेत न ॥ ३ ॥ कृत्तिकास्वर्द्धरात्रेऽसौ, चतुर्दश्यां तु मङ्गले । भोगी दाता शुचिर्दक्षः, स्थूलगण्डो महागलः ॥ ४ ॥

अर्थवानल्पभाषी च, स्थिरचित्तो जनप्रियः । परोपकारी कान्तश्चाबहुपुत्रः सौर्यसंयुतः ॥ ५ ॥ तेजस्वी रोगबहुलः, कण्ठरोगी सुमित्रकः । सविलासगतिः सत्यो, लाञ्छनी स्कन्धगण्डयोः ॥६॥ एवं गुणगणोपेतो, वृषे जातो भवेन्नरः । स समानां शतं जीवेत्, पञ्चविंशतिको यदि ॥ ७ ॥ नश्यच्चतुष्पदात्तस्य, मरणं रोहिणीबुधे । मृष्टान्नो दृष्टिलोलश्च, मैथुनासक्तमानसः ॥ ८ ॥ धनाढ्यः करुणोपेतः, कण्ठरोगी जनप्रियः । गान्धर्वनाट्यकुशलः, कीर्त्तिभागी गुणोत्कटः ॥ ९ ॥ दुःखितः प्रथमं भूत्वा, पश्चाच्छ्रीमान् भवत्यसौ । कुतूहली प्रगल्भश्च, विज्ञानी स भवेत्तथा ॥ १० ॥ गौरो दीर्घः पटुर्वाचि, मेधावी च दृढव्रतः । समर्थो न्यायवादी च, मिथुनोद्भूतमानवः ॥ ११ ॥ जले तस्यापमृत्युः स्यात्, वत्सरे किल षोडशे । आशीतिके म्रियेतासौ, पौष-मासे जलानले ॥ १२ ॥ कार्यसारो धनी सूरो, धर्मिष्ठो गुरुवत्सलः । शिरोरोगी महाबुद्धिः, कृताङ्ककृतवेदकः ॥ १३ ॥ प्रवास-शीलः कोपान्धो, बाल्ये दुःखी सुमित्रकः । भृतभृत्यो मनाग्वक्रो, बहुभार्यः पुत्रवांस्तथा ॥ १४ ॥ हस्ते श्रीवत्सशङ्खाभ्यां, युक्तः कर्कटकोद्भवः । पतनेन म्रियेतासौ, वर्षाणां विंशतौ नरः ॥ १५ ॥ दशवर्षस्य वा मृत्युस्त्रयोविंशतिकस्य वा । अशीतौ वा पुनः पौषे, मृगशीर्षशितौ निशि ॥ १६ ॥ श्रीमान् मानी क्रियायुक्तो, मद्यमांसप्रियस्तथा । देशभ्रमणशीलश्च, विनीतः शीत-भीरुकः ॥ १७ ॥ क्षिप्रकोपी सुपुत्रश्च, जननीजनवल्लभः । व्यसनी प्रकटो लोके, पिङ्गनेत्रः क्षुदार्त्तकः ॥१८॥ अल्पप्रज्ञो नृपे भक्तो, मृष्टान्नी विक्रमी तथा । पश्चाद्विरागी जायेत, सिंहे जातो मनुष्यकः ॥ १९ ॥ पञ्चाशत्को म्रियेतासौ, यद्दिवा शतिको मघौ । मघासु जीवितं मुञ्चेत्, पुण्यक्षेत्रे शनैश्चरे ॥ २० ॥ विलासिनीजनाह्लाददायको धनपूरितः । दाता दक्षः कविर्वृद्ध-भावे धर्मपरायणः ॥ २१ ॥ सर्वलोकप्रियो नाट्ये, गान्धर्वव्यसने रतः । प्रवासशीलः स्त्रीदुःखी, नेत्ररोगी च निर्भयः ॥ २२ ॥

कट्युदरविशालश्च, कन्यजोऽतो भवेन्नरः । शिरोरोगाज्जलादग्नेः, शस्त्रात् त्रिंशद्वार्षिकः ॥ २३ ॥ त्रयोविंशतिको वाऽपि, म्रियते ऽसौ ततः परम् । अशीतौ मूलनक्षत्रे, वैशाखे बुधवासरे ॥ २४ ॥ अस्थानरोषणो दुःखी, स्फुटभाषी क्षमान्वितः । चलाक्षश्चललक्ष्मीको, गृहे दर्शितविक्रमः ॥ २५ ॥ वाणिज्यदक्षो देवानां, पूजको मित्रवत्सलः । प्रवासी सुहृदामिष्टः, उदारः सत्यभाषकः ॥ २६ ॥ अलुब्धः संविभागी च, दीर्घनेत्रो दयापरः । निपुणः संग्रही चैव, तुलाजातो भवेन्नरः ॥ २७ ॥ म्रियेत विंशतौ कूपपातादिभ्योऽथवा पुनः । अशीतावनुराधासु, ज्येष्ठे मंगलवासरे ॥ २८ ॥ बाल्यप्रवासी क्रूरात्मा, शूरः पिङ्गललोचनः । परदाररतो मानी, निष्ठुरः स्वजने जने ॥२९॥ सहसा चाप्तलक्ष्मीको, जनन्यामपि दुष्टधीः । धूर्तश्चौरोऽफलारम्भी, वृश्चिकोद्भूतमानमः ॥ ३० ॥ वृश्चिकात्ताहिचौरान्नो, म्रियेताष्टादशाब्दकः । पञ्चविंशतिको वापि, ततो जीवति सप्ततिम् ॥३१॥ शूरः सत्यः धिया युक्तः, सात्त्विको जननन्दनः । शिल्पविज्ञानसंयुक्तो, धनाढ्यो वरभार्यकः ॥ ३२ ॥ मानी चारित्रसम्पन्नो, ललिताक्षरभाषकः । तेजस्वी स्थूलदेहश्च, कुलघ्नो राजपूजितः ॥३३॥ दरिद्रः पश्चिमे काले, मित्रद्वेषी कलिप्रियः । छिद्रपादाङ्गुलिः क्षेमी, धनुर्जातो भवेन्नरः ॥ ३४ ॥ अष्टादशदिने नो चेत्, मृतोऽसौ तर्हि सप्ततौ । आषाढमासे म्रियते, श्रवणे शुक्रवासरे ॥ ३५ ॥ कुजनेष्टो वशो स्त्रीणां, पण्डितः शीलसंयुतः । गीतज्ञो लाञ्छनी गुह्ये, पुत्राढ्यो माल्यवत्सलः ॥ ३६ ॥ दानी त्यागी सुरूपश्च, शीतालुर्भूरिबान्धवः । परिचिन्तितसौख्यश्च, स्थिरारम्भः कुतूहली ॥ ३७ ॥ मकरोत्थो मृतो नो चेद्विंशतौ सप्ततौ ततः । रेवत्यां म्रियते शूलान्नभस्ये शनिवासरे ॥ ३८ ॥ दाताऽलसः कृतघ्नश्च, गजेन्द्रतुरगस्वनः । शाल्ककुक्षिर्निर्भीको, धनभागी सशक्तिकः ॥ ३९ ॥ स्तब्धदृष्टिश्चलो हस्ते, मानविद्याकृतोद्यमः । पुण्याढ्यः स्नेहहीनश्च, भोगी शूरः

कविस्तथा ॥ ४० ॥ गुणज्ञः परकार्ये च, भापकः कुम्भसम्भवः । स च विंशतिवर्पश्चेद्, व्याघ्रेण न हतस्तदा ॥ ४१ ॥ सप्ताशीतितमे वर्षे, मासे भाद्रपदे तथा । म्रियते मानवः क्वापि, नीरे पतनसम्भवात् ॥ ४२ ॥ गम्भीरचेष्टितः शूरः, पटु-वाक्यो नरोत्तमः । क्रोधी प्राज्ञो रणश्रेष्ठो, न त्यागी बन्धुवत्सलः ॥ ४३ ॥ गान्धर्ववेदिको नित्यं, सेवकश्चेतरे जने । गच्छति त्वरया मार्गे, निर्लज्जः प्रियदर्शनः ॥ ४४ ॥ सत्यो देवगुरूपास्तिरतः प्रचुरशक्तिकः । विभूपानिरतो दक्षो, लोलाक्षः पार-दारिकः ॥ ४५ ॥ धनप्रियोऽस्थिरो नाम्ना, मीने जातो मनुष्यकः । मृत्युरष्टादशे वर्षे, पञ्चोनशतिकस्य वा ॥ ४६ ॥ तदेवं देव ! ये प्रोक्ता, मेपादीनां गुणा मया । एते पूर्वं स्वशिष्येभ्यः, सर्वज्ञेन निवेदिताः ॥४७॥ तथाहि—ज्योतिर्ज्ञानं निमित्तं च, तथाऽन्यदपि तादृशम् । अतीन्द्रियार्थं तच्छास्त्रं, सर्वं सर्वज्ञपूर्वकम् ॥ ४८ ॥ ततोऽत्र व्यभिचारः स्यात्, केवलं नरदोपतः । विभागं हि न जानीते, शास्त्रस्याल्पश्रुतो नरः ॥ ४९ ॥ एवं च स्थिते-क्रूरग्रहैर्न दृष्टाश्चेद्, बलवन्तश्च राशयः । ततोऽमीषां गुणाः सत्या, नान्यथेत्यवधारय ॥५०॥ ततोऽकलङ्कराजेनोक्तम्–एवमेतद्, नास्त्यत्र सन्देहः, सम्यगावेदितमार्येणेति दान-सन्मानादिना सम्पूज्य विसर्जितः सिद्धार्थः, प्रतिष्ठितं च महानन्दपुरस्सरं समुचिते समये कुमारस्य बलिरिति पूर्वपुरुपनाम, वर्द्धते चासौ पञ्चधात्रीपरिगृहीतः सन्निहितपुण्योदयो महासुखेन, बाल्यादप्यतिपरिचितीभूतः सन्निहितोऽस्य सद्बोधः, ननूक्तं च पूर्वभवादेव सन्निधानं सम्यग्दर्शनेन, ततोऽत्यर्थममुं हर्षयति देवदर्शनं सुखयति गुरुजनाङ्घ्रिवन्दनं प्रीणयति स्वा-ध्यायादिश्रवणं, ततः पुण्योदयादिप्रभावेण शीघ्रमेवाधीत्य कलाः कौमार्यादपि च पुष्टपुण्योदयाकृष्टा सन्निहितीभूताऽस्य गुरुता, न मुञ्चति क्षणमपि स्थिरता अभ्यर्णीभवति गम्भीरता, प्राप्तश्चैप क्रमेण यौवनभरं रूपसौभाग्यप्रकर्षं च, ततस्तिष्ठति

मदेव कलावेत्तृभिः कुमारैः सह शास्त्रविनोदेन कारयति देवगृहेषु स्नात्राणि प्रवर्त्तयति पूजा विधापयति रथयात्रा उत्सर्पयति तासु गीतवादित्रनृत्यप्रेक्षणीयैर्जिनशासनं दापयति दीनादीनां दानानि शृणोति गुरूणां समीपे सदागमं, तत्र च परिचितीभवति ममस्तमपि चारित्रसैन्यं, ततो भीतभीतं परिभ्रमति दूरेण मोहमहाचरटबलं, यतो न स्पृशत्यमुं विषयरागो न चरति सन्निधानेनाप्यस्य द्वेषो नाश्रयति समीपं वैश्वानरः नासन्नमागच्छति शैलराजो न वसति चेतस्यपि शठता न दृष्टिविषयीभवति लोभः न बाधते तं स्पर्शाभिलाषः न जानात्यसौ वार्त्तामपि सलोलतायाः न शृणोति कथामपि गन्धग्रहे नाक्षिप्यते चक्षुरप्यस्य रूपेण न भाव्यते श्रोत्रमपि मधुरशब्दैः न निकटीभवति स्वप्नेऽपि कृपणता न परिवसत्यङ्गेऽप्यविनयः, ततः केवलविनयप्रशममार्दवार्जवसन्तोषजितेन्द्रियत्वौदार्यगाम्भीर्यस्थैर्यशौर्यादिगुणमयशरीरस्य तस्य प्रसरत्यादिगन्तमपि कीर्तिः स्निग्धतोऽत्यर्थमेव तद्विनयादिगुणरञ्जितौ पितरौ नेच्छतः क्षणमपि तद्विप्रयोगं, प्रवर्त्तन्ते च तस्य प्रतिगृहं गुणकथाः गीयन्ते सुरसुन्दरीभिरपि सोत्कसोत्कण्ठाभिस्तद्गीतानि पठ्यन्तेऽमरबन्दिवृन्दैरपि सुकविकाव्योपनिबद्धानि शरच्चन्द्रचन्द्रिकाचारूणि तच्चरितानि, तदेवं बलिकुमारे गुणमयतां गते सर्वस्मिन्नपि गाढं तदनुरागाक्षिप्तमदनपरवशीकृतमानसाः स्वसौन्दर्यातिशयतिरस्कृतरतिरम्भादिरूपगर्वाः समग्रगुणरत्नरोहणभूमयो निजनिजमहाविभूतिकलिताः समायाताः युगपदेव बहुभवोपचिततन्महाभोगफलपुण्योदयाकृष्टाः स्वयंवरा एवानेकमहाभूपालवरकन्यकाः, दापितास्तासामपि प्रहृष्टेनाकलङ्कनरेन्द्रेणावासप्रासादाः, ततो देव्या सुदर्शनया राज्ञा द्वाभ्यामपि च लक्षिततद्व्रतप्रतिपत्तिभ्यां युगपद्दर्शितमहाप्रश्रयमेकान्तेऽञ्जलिं बद्ध्वा प्रार्थितो बलिकुमारः-वत्स ! यद्यावां पितरौ गणयसि धर्मस्य सारमवैषि एताश्च त्वद्गुणश्रवणाकृष्टमनसो महानरेन्द्रैर्निजदुहितरः प्रेषिताः समा-

याता निराशीभूय व्यावृत्य गच्छन्त्योऽस्माकं महच्चित्तबाधाकारणमित्यवगच्छसि तदा गृहाण तानदेतासां मङ्गलपूर्वकं पाणिं, दर्शय बृहन्मनोरथैः समायातानां वराकीणां स्वराज्यसम्भोगसुखानि, ततो दृष्टभवद्राज्यास्वादेष्वस्मासु उपरतेषु परिपाल्य विपुलं राज्यं निवेश्य तद्भारं निजपुत्रस्य यदन्यत् किमपि चिन्तितं तदपि कुर्यास्त्वमित्येवमपि पितृवत्सलस्य न किमपि क्षुण्णं भविष्यतीति, ततो बलिकुमारेण चिन्तितम्—अहो महानिर्बन्धः पित्रोः, एक एव चाहमनयोः पुत्रः ततो यद्येतद्वचनं लङ्घयामि तदा महदार्त्तमेतयोरुत्पद्यते, तस्माद् यन्मयाऽपि चिन्तितं कालान्तरेऽपि तन्निश्चितं करिष्यामि, साम्प्रतं तावदनयोरपि समाधानमुत्पादयामीत्यवश्यमेव भोक्तव्यानि भोगकर्म्माणीत्युत्पन्नैतदभिप्रायेण प्रतिपन्नं मातापितृवचनं अकामेनापि बलिकुमारेण, ततस्ताभ्यां ताभिः महास्य कारितो विशिष्टलग्ने महाविभूत्या पाणिग्रहणोत्सवः, ततोऽकलङ्कराजेन कारितं कुमारयोग्यं क्रीडाशैलशिशिरजलवाहिनीसरःपङ्क्तिपुष्करिणीसंयुक्तमहोपवनशोभितं रमणीयं मध्ये महाभवनमेकं पार्श्वतस्तु तद्भार्याणां योग्याः कारिता रम्या महाप्रसादाः, ततो द्वात्रिंशत्पात्रनिबद्धनाटकानि प्रेक्षमाणस्ताभिः सह पूर्वभवोपचितदेवलोकोपमविपुलभोगाननुभवन् प्रागुक्तविधिना धर्मं च कुर्वाणो गमयति बहूनि दिनानि बलिकुमारः, ततश्चिरपालितराज्येन भवविरक्तमनसाऽकलङ्कराजेन जिनदीक्षां जिघृक्षुणा निवेशितः स्वपदेऽसौ, स्वयं तु प्रतिपन्ना भगवतः कुवलयचन्द्रकेवलिनः समीपे दीक्षा, कृत्वा च तीव्रं तपश्चरणं स्वल्पैरेव दिवसैर्मोहादिरिपुक्षयं कृत्वा जगाम निर्वृत्तिपुरीमसौ, देवी सुदर्शनापि राज्ञा सह दीक्षां प्रतिपद्य शुद्धां च तां परिपाल्य गता देवलोकं ॥ बलिरपि ततोऽपि पुष्टीभूतपुण्योदयेन विहितो महानरेन्द्रः, सिद्धाश्च तस्य पूर्वजैरसाधिता अप्यनेके माण्डलिकसामन्तसीमालचरटाः, ततः पालयत्युपशान्तडिम्बडमरं

राज्यं, चत्वारिंशत् पूर्वलक्षाणि कौमार्येऽतिक्रान्तानीत्येवं षष्टिपूर्वलक्षाणि यावदतिगुर्व्यो देवानामपि मनश्चमत्कारिण्यः कारितास्तेन जिनशासनोत्सर्पणाः, विहिताः प्रभूतस्थानेषु जीर्णोद्धाराः कारितानि च स्वदेशेऽनेकग्रामनगरादिषु नूतनान्यपि महायतनानि, सर्वत्र प्रवर्त्तिता महत्यो रथयात्राः, दूरं वृद्धिमुपनीतो जिनधर्मो, भुक्ताश्च सुराणामपि स्पृहणीया महाभोगाः, ततोऽन्यदा चतुर्दशीदिवसे उपोषितेन सूर्यास्तसमये देवार्चनं कृत्वा रजनीं स्वाध्यायादिनिरतेन सामायिकपौषधविधिना शुभभावेनातिवाह्य तद्विरामे विशेषतः सन्निहिते सद्बोधादिचारित्रधर्मसैन्ये चिन्तितं बलिनरेन्द्रेण–पश्यताहो इतरेणेव मया विषयामिषलवमात्रगृद्धेन लब्ध्वाऽप्यतिदुर्लभमिदं बहु हारितं मानुषं जन्म, यैश्च सागरोपमादिकालपर्यन्तैरपि सुरलोकभोगैः प्राणिनो न तृप्यन्ति पञ्चषदिनभाविभिरत्यसारैर्विडम्बनाकल्पैरिहोपभुक्तैः कथमिव तृप्तिरवाप्स्यते ?, न चेह तत्त्वबुद्ध्या परिभाव्यमानं किमपि जीवलोके रमणीयमवलोक्यते, यदपि भ्रान्तिमात्रतः किमपि रमणीयमिति भाति देहिनां तदप्यनित्यता-महाव्याघ्रीवक्त्रकुहरगतमेव सर्वं, तथाहि–मन्यन्ते मूढाः रूपयौवनाभ्यां रमणीयं शरीरं, ते च रूपयौवने कुष्ठादिरोगैस्तथा विनाश्येते यथा पूर्वं सुरसुन्दरीणामपि स्पृहणीयो भूत्वा भवति मातङ्गीनामपि जुगुप्सनीयः, रोगाभावे त्ववस्थिता एव प्रति-क्षणं तद्विध्वंसका जरादयः, याप्यर्वाग्दृशां सर्वेषामपि सारा प्रतिभाति लक्ष्मीः साऽपि महाक्लेशानपि कुर्वतां न भवति, भवति चेत्तर्हि पश्यतामपि तथा विघटते यथा तत्सद्भावेन जगतोऽपि गौरव्यो भूत्वा करोति पश्चात् परगृहेषु दासतां, जीवतः कथमप्यविघटितामपि म्रियमाणः सर्वथा परिहृत्यैव श्रियं व्रजति जन्मान्तरे, तत् कस्तस्यां प्रतिबन्धः ?, योऽपि प्रभुत्वा-भिमानः सोऽप्यविवेकविलसितमेव, यतश्चक्रवर्त्त्यपि क्षीणपुण्योदयो जीवन्नपि कोऽपि भिक्षां भ्रमतीतिश्रूयते, दृश्यते

तदन्यप्रभुत्वध्यक्षमेवेदं, अथ जीवन्न भ्रस्यति प्रभुभावात्तर्हि मृतश्चक्राधिपोऽप्युत्कृष्टतः सप्तमनरकपृथिवीनारको भवति, तत् क इतरेषां प्रभुत्वसारताभिमानः ?, यदपि ममाज्ञाविधेया बहवः पुत्राः स्नेहवती सुरूपा च भार्या निर्देशमात्रवर्त्ती शेषपरिजन इति ममैव श्लाघ्यः कुटुम्बिभाव इति परिभावयन्तः केचिद् प्रेमपरवशीभवन्ति तदप्यविचारितरमणीयमेव, यतः स्वकार्यनिष्ठ एव सर्वः पुत्रकलत्रादिकोऽभीष्टलोकः, स च तद्विसंवादे विसंवदत्यसंशयमेव, न चात्यन्ताभीष्टोऽपि रोगजरा-मरणादीनि रक्षितुं क्षमते, म्रियमाणैश्च स्तोकदिनान्ते सर्वमेव पुत्रादिकमवश्यं परित्यज्यत इति, किं तद्रमणीयत्वेन, यदप्यहं शृणोमि सर्वगीतानि पश्यामि रमणीयरूपाणि जिघ्रामि सुगन्धान् आस्वादयामि मनोज्ञरसान् स्पृशामि कोमलाभीष्ट-स्पर्शानिति केषांचिद्विषयरमणीयताभिमानः सोऽप्यज्ञानविजृम्भितमेव, यतोऽस्मिन् क्षणे प्राप्ताः परिभुज्यमाना: विषया यत् सुखमुत्पादयन्ति ततोऽनेकगुणमेव समयान्तरितैरप्राप्यमाणैर्दुःखं, निरन्तरप्राप्तौ वा मृतानामकृतपुण्यकर्मणामवश्यंभाविनि तद्भ्रंशेऽनन्तगुणमेव तद्विपाकजं दुःखं, एवमन्यदपि यत्किमपि कस्यचित् सांसारिकं वस्तु भ्रान्तिमात्रतो रमणीयमाभाति तत् सर्वमनन्तदुःखफलमनित्यं चावैम्यहमिदानीं, तन्नूनं प्रेमदण्डाभिघातमूर्च्छितेनैव राज्यसुखबुद्धिमदिरामत्तेनैव विषयविष-घारितेनैव विभवहृत्पूरास्वादनविपर्यस्तेनैव निरर्थकान्यनर्थफलानि वा गमितान्येतावन्ति दिनानि, तद्यदि पश्याम्यधुना कथमपि तं भगवन्तं कुवलयचन्द्रकेवलिनं येनात्र भवमहोदधौ प्रवणपोतायितमकलङ्कमहाराजस्य तदा निश्चितमद्यापि स्व-कार्यमप्यनुतिष्ठामीत्यादिशुभचिन्तया प्रभाते पारितपौषधादिव्रतः शुचित्वमापन्नो देवार्चनं विधाय समुपविष्ट आस्थानसभा-मण्डपे, भगवान् कुवलयचन्द्रकेवल्यपि बलिनरेन्द्राभिप्रायं च विज्ञाय समायातश्चन्द्रपुरीनगर्या बहिर्वर्त्तिनि मृगरमणनाम्नि

रमणीयोद्याने, विरचितं देवैस्तत्र सुवर्णकमलं, उपविष्टस्तत्र भगवान् केवली, समागतास्तत्र सुरखचरनिवहाः, प्रारब्धा तेन तेषाममृतस्यन्दिनी धर्मदेशना, तदागमनवार्त्तां च श्रुत्वा समागतस्तत्र सर्वसामग्र्या हर्षोदञ्चितशरीरो बलिनरेन्द्रः, ततः पञ्चविधाभिगमेन त्रिप्रदक्षिणीकृत्य भक्तितः प्रणम्य चोपविष्टः शुद्धभूतले, ततो धर्मं श्रुत्वाऽवसरे प्रोक्तमनेन–भगवन्निरर्थकमेव मितं मया मनुजजन्म, बहूनि हारितेऽस्मिन् मनुष्यजन्मनि मयेदानीं शरणमवाप्तमिदं युष्मच्चरणयुगलं, ततः सफलीकुर्वन्तु भगवन्तो मम कथमप्यधुनाऽप्येतन् मनुष्यजन्मशेषमिति, ततः केवलिनाऽभिहितं–महाराज ! कियदेतद् यदत्र जन्मनि त्वया हारितं ?, प्राक्तन् किमपि हारितं यत् कथ्यमानमपि भयजनकं सकलभुवनाश्चर्यकारि च, ततो बलिनरेन्द्रेणोक्तं–स्वामिन् ! तर्हीदमेव तावच्छ्रोतुमिच्छामि, प्रसादं विधाय निवेदयतु भगवान्, ततः केवलिना प्रोक्तं–महाराज ! सर्वायुषाऽप्येतत् कथयितुं न शक्यते, केवलं यदि भवतां कुतूहलं तर्हि समाकर्णयत संक्षिप्य किंचित् कथ्यते। इतोऽनन्तकालात् परतो भवान् किल चारित्रधर्मसैन्ये महायोधो भूत्वा मोहारिबलक्षयं करिष्यतीति कर्मपरिणामेनासंव्यवहारनिगोदपुरान्निष्काश्य समानीतो व्यवहारनिगोदेषु, ततो विनाननदुष्यतिकरैर्मोहादिभिः प्रकुपितैर्विधृतस्तेष्वेव त्वमनन्तकालं, ततः पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपञ्चेन्द्रियतिर्यक्षु नरकस्वनार्यमनुष्येषु चानीतस्त्वं कर्मपरिणामेन, पुनः पुनरनन्तवाराः कुपितैर्मोहादिभिर्व्यावर्त्त्य नीतोऽसि पश्चान्मुखं निगोदादिषु, एवं तावद्यावद् भ्रामितोऽस्यतिदुःखितस्तैरनन्तानन्तपुद्गलपरावर्तान्, ततश्चार्यक्षेत्रेऽपि लब्धं मनुष्यत्वमनन्तवाराः, किन्तु हारितं क्वचित् कुजातिभावेन क्वापि कुलदोषेण क्वचिद् जात्यन्धबधिरखञ्जत्वादिवैरूप्येण क्वापि कुष्ठादिरोगैः क्वचिदल्पायुष्कत्वेन, एवमनन्तवारा धर्मस्य नामाप्यज्ञात्वा भ्रान्तस्तथैव पराङ्मुखो व्यावर्त्यानन्तपुद्गलपरावर्त्तानेकेन्द्रियादिषु, ततोऽन्यदा

श्रीनिलयनगरे धनतिलकश्रेष्ठिनो जातस्त्वं वैश्रमणनामा पुत्रः, तत्र च " स्वजनधनभवनयौवनवनितातन्वाद्यनित्यमिदमखिलम् । ज्ञात्वाऽऽपत्राणसहं धर्मं शरणं भजत लोकाः ॥१॥" इति वचनश्रवणाज्जाता धर्मकरणबुद्धिः, केवलं सापि कुदृष्टिसम्भवा महापापबुद्धिरेव परमार्थतः सञ्जाता, तद्वशीकृतेन च स्वयम्भुनाम्नस्त्रिदण्डिनः शिष्यत्वं प्रतिपन्नं, ततस्तदपि मानुपत्वं हारयित्वा व्यावर्त्तितो भ्रामितः संसारेऽनन्तपुद्गलपरावर्त्तानिति, ततोऽप्यनन्तकालात् पुनरप्यन्तराऽन्तरा लब्धं मानुपत्वं, परं न निवृत्ताऽसौ कुधर्मबुद्धिः, शुद्धधर्मश्रवणाभावात्, तदभावोऽपि क्वापि सद्गुरुयोगाभावात् क्वचिदालस्यमोहादिहेतोः क्वचित् कुतूहलात्, क्वचित् शुद्धधर्मश्रवणेऽपि न निवृत्ताऽसौ शून्यतया तदर्थानवधारणात् क्वचित्तत्त्वाश्रद्धानेन, ततः कुधर्म्मबुद्ध्युपदेशाद्धर्म्मच्छलेन पशुवधादिमहापापानि कृत्वा भ्रान्तस्तथैवानन्तपुद्गलपरावर्त्तान् । तथा विजयवर्द्धनपुरे सुलसश्रेष्ठिपुत्रेण नन्दनेन सता यथाप्रवृत्तिकरणेन छित्त्वा कृतान्यन्तःसागरोपमकोटीकोटिस्थितिकान्यायुर्वर्जमोहादिसप्तकर्म्माणि, गतश्च ग्रन्थिदेशं यावन्न लब्धश्च भेत्तुमसौ तावत् व्यावर्त्तितस्तथैवाश्रद्धानरागद्वेषादिभिः, एवं यावदनन्तवारा व्यावर्त्त्य धृतः प्रतिवेलमनन्तकालं, अन्यदा मलयपुरे इन्द्रराजसूनुर्विश्वसेनभवेऽपूर्वकरणेन भिन्नोऽयं ग्रन्थिः, ततोऽनिवृत्तिकरणप्रवेशादिक्रमेण लब्धमेतावतः कालात् सम्यक्त्वरत्नं, ततो मोक्षतरुमूलमतिदुर्लभमपीदमवाप्य हारितं कुदृष्टिरागवशगेन, पुनः कदाचिद्धनदत्तश्रेष्ठिसुभगभवे लब्धैतन्नाशितं स्नेहरागाद् गृहपतिपुत्रसिंहजन्मनि ध्वंसितं विषयरागात्, जिनदासदुहितृजिनश्रीभवे समुत्सादितं द्वेषात्, ततो ब्राह्मणज्वलनशिखधनंजयराजपुत्रकुबेरधनाढ्यश्रेष्ठिपुत्रसोमदत्तभवेषु यथासंख्यमेव हारितं सम्यक्त्वरत्नं क्रोधमानमायालोभेभ्यः, एवमन्यान्यमोहादिशत्रुवशाद्भवता हारितमेतदसंख्यातभवेषु, धर्मश्रेष्ठिसुतसुन्दरजन्मनि हिंसातो हारिता देशविरतिः माणिभ-

द्रविणभवे तु मृषावादात् सोमभवेऽदत्तादानाद् दत्तजन्मनि तु मैथुनाद् धनबहुलश्रेष्ठिभवे तु परिग्रहाद् रोहिणीश्राविकाजन्मनि विकथानर्थदण्डाद्, एवं देशविरतिरप्यपरापरमोहादिदोषतो निःशेषसुखहेतुभूता हारिता त्वयाऽसंख्यभवेषु, ततोऽरविन्दकुमारजन्मनि ज्ञानिना मापि विषयसुखशीलतया, विजयसेनराजपुत्रभवे तु लब्ध्वा सर्वविरतिमारूढोऽसि त्वमेकादशे गुणस्थाने, ततोऽपि च्यावितो देहोपकरणमूर्छामात्रेण केनचिदिति, ततः श्रेष्ठिपुत्रपुण्डरीकभवे पुनः प्राप्ता सर्वविरतिरधीतानि चतुर्दश पूर्वाणि, एतावत्यपि पदवी नागिना त्वया निद्रामात्रावलगनेन, तदेवमनन्तानन्तपुद्गलपरावर्त्तेष्वित्थं मोहादिशत्रुवशगेन हारितं निरर्थकमेव भवता अनन्तवारा मनुष्यजन्म, ततः पद्मस्थले नगरे जातस्त्वं सिंहरथनामा सिंहविक्रमराजसूनुः, तत्र पुनरप्यवाप्ता सर्वविरतिः, सा चात्र भवे आराधिता सम्यक् कृतश्च बहुर्मोहाद्यपचयो नीतश्च पुष्टिं पुण्योदयः, ततो महाशुक्रदेवलोकं गत्वा समुत्पन्नः कमलाकरनगरे श्रीचन्द्रनरपतेर्भानुनामा पुत्रः, तत्रापि तथैवाराधिता सर्वविरतिः, कृतश्चाधिकतरो मोहाद्यपचयः पुण्योदयपुष्टिश्च, ततो नवमग्रैवेयकेषु गत्वा सञ्जातः पद्मखण्डनगरे इन्द्रदत्तमहाराजः, तत्रापि सर्वविरतिं सम्यगाराध्य मोहाद्यपचयं पुण्योदयपुष्टिं च परमप्रकर्षवर्तीं विधाय जातः सर्वार्थसिद्धिमहाविमाने, ततोऽपि च्युत्वा समुत्पन्नस्त्वमत्र वलिमहानरेन्द्र इति ॥ तदेवं निजचरितं श्रुत्वा सम्भ्रान्तः समुत्थाय वलिनरेन्द्रो लग्नः कुवलयचन्द्रकेवलिनः पादयोः, अभिहितवांश्च–भगवन्! अतिदुष्टा मोहादिशत्रवः, ततो यावदद्याप्यस्मिन्नेव भवे मां न ते तथैव छलयन्ति तावत् प्रसादं विधाय मीलय चारित्रधर्मसैन्ये, उपायं च कथय येन ते मम न प्रभवन्ति, अहं तु करोमि तेषां पर्यन्तं, ततः केवलिना प्रोक्तं–राजन्! युक्तमिदं भवादृशाम्, अतो गृहाण मन्त्रिण्यवेगं मीलयामि येन त्वां समीहितसैन्ये, उपायश्चायं रिपुक्षये, प्रतिपद्यस्व शेषसंगत्यागेन चारित्रधर्ममेव शरणं, मा त्याक्षीः

क्षणमपि सर्वविरतिसंगं, अतिसन्निहितान् अतिप्रियाँश्च कुरु सद्बोधसम्यग्दर्शनसदागमान्, शेषमपि प्रशममार्दवार्जवसन्तोपतपः-संयमसत्यशौचाकिञ्चन्यब्रह्मचर्यशीलाङ्गादिबलमुत्कर्षयन् समयमपि समीपात् मा मुञ्च, ततः सद्बोधसदागमोपदिष्टविधिना गाढावलम्बितसत्त्वो यथोक्तानन्तसैन्यसहितस्तैर्मोहादिशत्रुभिः सह कुर्याः त्वमहर्निशं महासमरं, ततश्चारित्रधर्म्मसैनिका भवतः सहायास्त्वमपि तेषां सहायो भूत्वा सर्वथैव मोहारिबलक्षयं कृत्वा भविष्यसि निर्वृत्तिपुरीपरमेश्वर इति। तदेतत् केवलिवचन-माकर्ण्य हृष्टेन दुर्घटाः खल्वीदृशसामग्र्यः पुनरपीति परिभाव्य तत्रोपविष्टेनैव वलिनरेन्द्रेण पट्टमहादेवीरतिसुन्दरीसम्भवस्य नयसाराभिधानज्येष्ठपुत्रस्य कृता स्वपदस्थापननिरूपणा, स्वयं तु जिनायतनपूजामहादानामारीसमुद्घोपणनिरूपणादिमहोत्सर्पणापूर्विकां नृपतिमाण्डलिकमन्त्रिसामन्तपौराणां पञ्चभिः शतैः कतिपयान्तःपुरिकाभिश्च सह केवलिसमीपे विधिवत् जग्राह दीक्षाम्, अनुष्ठितवाँश्च सर्वामेव गुरुप्रदत्तशिक्षां, सद्बोधपुण्योदयप्रभावाच्च स्वल्पैरेव दिवसैरधीतानि तेन द्वादशाप्यङ्गानि, जातश्चानेकातिशयसम्पन्नः, ततः समयं विज्ञाय कुवलयचन्द्रकेवलिना निजपदे व्यवस्थापितोऽसौ, समर्पितश्च सर्वोऽपि गच्छस्तस्य, स्वयं तु शैलेशीकरणभवोपग्राहिकर्म्मनिर्जरणक्रमेण गतो निर्वृत्तिनगर्या। वलिराजर्षिः सूरिरपि सद्बोधसदागमोपदिष्टविधिना समरे मोहारिबलं निकन्दयन् अनेकग्रामनगरदेशेषु तद्विडम्बनेभ्यो भूरिलोकं च विमोचयन् विजहार। अन्यदा चाप्रमत्तगुणस्थानक्रमागतेन प्राप्ता तेनाकस्मादतिविशुद्धाध्यवसायलक्षणक्षपकश्रेणिखड्गयष्टिः, तया निर्मूलत एव निहताश्चत्वारोऽप्यनन्तानुबन्धिनः क्रोधादयः, समूलकापंकपितोऽविशुद्धमिश्रविशुद्धरूपत्रययुक्तो मिथ्यादर्शनः, ततोऽपूर्वकरणगुणस्थानं स्पृष्ट्वा गतोऽनिवृत्तिबादरगुणस्थानं, तत्र च प्रारब्धा मूलत एवोच्छेदयितुमप्रत्याख्यानप्रत्याख्यानावरणाभिधाना अष्टौ कषायाः, तेषु

नार्द्दितेष्वेव नरकगतिनरकानुपूर्वीतिर्यग्गतितिर्यगानुपूर्वीः एकद्वित्रिचतुरिन्द्रियाणां चतस्रो जातयः आतपोद्योतस्थावरसूक्ष्मसाधारणानि चेत्येते नामकर्मणस्त्रयोदश भेदा निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिलक्षणास्तिस्रो निद्राश्च क्षयं नीताः, ततोऽर्द्धक्षपिता अष्टौ कषाया निःशेषिताः, ततो नपुंसकवेदस्ततोऽपि स्त्रीवेदस्तदनन्तरं तु निहतं हास्यरत्यरतिशोकभयजुगुप्सालक्षणं रिपुषट्कं, ततः पुरुषवेदः, ततः संज्वलनक्रोधस्ततो मानस्ततो माया ततोऽपि निहतः संज्वलनलोभः, अयं च निहन्यमानः सूक्ष्मीभूय नंष्ट्वा निलीनः सूक्ष्मसम्परायनामके दशमसोपाने, तत्रापि तेन पृष्ठतो गत्वा निहतः सोऽपि क्षपकश्रेणिस्वरूपया, तदेवमष्टाविंशतिसूर्यमानुपातमके पतिते मोहराजे स्खलितो बलिराजर्षिः सूरिः, उत्प्लुत्य गतः क्षीणमोहस्थाननामके सिद्धसौधस्य द्वादशे सोपाने, तत्र च मतिश्रुतावधिमनःपर्यायकेवलावरणपञ्चरूपोऽपि निहतो ज्ञानावरणमहासामन्तः, तथा दानलाभभोगोपभोगवीर्यान्तरायपञ्चप्रकारोऽन्तरायः, तथा निद्राप्रचलाचक्षुरचक्षुरवधिकेवलदर्शनावरणलक्षणा निहताः षड् भेदा दर्शनावरणस्य, तदेवं घातिकर्म्मचतुष्टयलक्षणे महानायकचतुष्टये पतिते जातमनायकमकिञ्चित्करं च प्रायो रिपुसैन्यं, ज्ञानदर्शनावरणाभ्यां व्यावृत्त्याधृतपूर्वे प्रकटीभूते बलिराजर्षिमहासूरेः सकलपदार्थसार्थविभासके केवलज्ञानकेवलदर्शने, ततः समारूढोऽसौ सयोगिकेवलगुणस्थाननाम्नि त्रयोदशसोपाने, ततः प्राप्ताः सर्वेऽपि चारित्रधर्मोदयः परमोत्कर्षं, न मान्यत्रेषु कोऽपि तत्सैन्ये, बलिकेवलिनाऽपि ततः प्रभृति सविशेषाणि मोहादिमर्माणि प्रकाश्य बहुतरदेशेषु विमोचितः तद्विडम्बनाभ्यः प्रचुरलोकः, साम्प्रतं त्वस्मिन्नेव देशे युष्मत्प्रभृतिलोकानां तद्विमोचनार्थमायातः, स च मोहारियन्दुःखमोचितपरितुष्टलोकैः कृतभवनभानुनामाऽहमेवेति ॥ तदेतदाकर्ण्य हर्षभररोमाञ्चितशरीरश्चन्द्रमौलिभूपालः समुत्थाय

तच्चरणयोर्विलग्य प्रणम्य च प्रोक्तवान्–भगवन् ! साध्वनुगृहीताः साधु निजागमनेन, ( ग्र० ७००० ) विशेषस्त्वनेनागम-सर्वस्वावबोधिना निजचरितकथनेन, ततः केवलिना प्रोक्तं–महाराज ! निजचरितं स्वयमेव कथयतां न युक्तं, तत्कथने हि स्वगुणोत्कीर्त्तनं कर्त्तव्यमापद्यते, तच्च धर्मनीतिविरुद्धं, परं युष्मदादीनामुपकारमवेक्ष्य संक्षेपतस्तदपि कथितं, विस्तरतो हि सर्वायुपाऽप्येतत् कथयितुं न शक्यते, यतो न केवलमेतदस्मच्चरितं, किन्तु प्रायः सर्वजीवानामपि, सर्वेऽपि जीवाश्चतुर्दशरज्ज्वात्मके लोके न तदेकेन्द्रियेषु स्थानं न तद्विकलेन्द्रियाणां रूपं नासौ जलस्थलखचरपञ्चेन्द्रियतिरश्चां व्यक्तिः न सा नरकपृथ्वी नायमेतासु नरकावासो न तन्मनुष्येषु ग्रामनगरादिस्थानं यत्रानन्तशो नोत्पन्नाः, देवेष्वपि भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवलोकेभ्योऽर्वाग्नासौ देवो नाप्यसौ देवी यत्स्थानेऽनन्तशोऽमी नोत्पन्नाः, सनत्कुमारादिष्वपि देवलोकेषु नवमग्रैवेयकपर्यन्तेषु देवेषु प्रायो नास्त्यसौ देवो यत्स्थानेऽनन्तवाराः सर्वेऽपि जन्तवो नाभूवन्, न चेह संसारे तत् सुखं दुःखं वा यदनन्तशस्तैर्नानुभूतं, आर्हतमपि लिङ्गं द्रव्यतोऽनन्तवारा एकैकेन प्रतिपन्नं त्यक्तं च, एतत् सर्वमस्मज्जीवस्यापि सामान्येनानन्तकालान्तरालभवभ्रमणभणनेन भणितं द्रष्टव्यं, व्यक्तितस्तु नोक्तं, अनन्तकालभणनीयत्वाद्, आयुपस्तु संख्येयत्वाद्वाचश्च क्रमवर्त्तित्वादिति, तस्मादशरणेन मयाऽप्यनन्तदुःखलक्षाण्यनुभूतानि, प्रतिपन्नकुधर्मशरणेनापि तथैव सविशेषाणि वा, अङ्गीकृतसम्यग्जिनधर्मशरणेन तु सुदेवत्वसुमानुपत्वसुखान्येवानुभूतानि, अनन्तानि तु शाश्वतानि निर्वृत्तिपुरीसुखान्यनुभविष्यन्त इत्यस्माकमपि सञ्जातोऽन्यः शरणमतस्तवापि स एव शरणं भविष्यति, नान्यः, ततः संवेगभरप्रवृत्तबाष्पजलप्लावितलोचनेन प्रोक्तं चन्द्रमौलिक्षितिपालेन–यथा पूज्यैरादिष्टं तथैवैतत्, परोपकारैकचित्तवृत्तिभिर्भवद्भिर्मदनुग्रहायैव कृतोऽयं व्याप-

कगम्भीरार्थनिजचरितकथनप्रयासः, अन्यथा भवजलधितीरमागतानां सिद्धनिःशेषस्वकार्याणां भवतां किमनेन ?. परं भगवन्नव्यवहारनिगोदेभ्यः कियन्तो जीवा एककालं निर्गच्छन्ति ?, केवलिना प्रोक्तं–" सिज्झंति जत्तिया खलु इहइं ववहाररासिमज्झाओ । एंति अणाइवणस्सइमज्झाओ तत्तिया चेव ॥ १ ॥ " ततोऽभिहितं–भवत्वेवं, केवलं किं सर्वेऽपि तन्निर्गता जीवा एतावतः कालात् सिध्यन्ति ?, केवलिनोक्तं–बहवो भव्यास्तावदेतावतः कालात् सिध्यन्ति, अन्ये तु स्वल्पाद्, परे तु स्वल्पतराद्, यावत् कश्चित् मरुदेवीस्वामिनीवत् स्वल्पेनैव कालेन सिध्यन्ति, अभव्यास्तु न कदाचिदपि सिध्यन्ति, ततो निःसन्देहपरिणतधर्मेणोक्तं–भगवन् ! स तर्हि सम्यग् जिनधर्मो मम शरणं युष्मच्चरणसाक्षिक एव भवतु, किमिह विलम्बेन ?, मुच्यतामेषोऽपि जनो युष्मत्प्रसादेन मोहारिविलविडम्बनाभ्यः, ततो वलिकेवलिनाऽभ्यधायि–राजन् ! न किंचिदेतदयुक्तम्, अतः प्रहृष्टात्मना तेनापि चन्द्रवदनाभिधानं स्वपुत्रमात्मपदे संस्थाप्य कतिपयकलत्रमन्त्रिसामन्तादिसमन्वितेन प्रतिपन्नं तथैव निधिवत् विभूत्या तदन्तिके व्रत, गृहीता चाल्पदिनैरेव सर्वाऽपि शिक्षा अधीतानि चतुर्दशापि पूर्वाणि समारूढो गुरुगुणेषु, समये च निवेशितो वलिकेवलिना स्वपदे, समर्पितश्च तस्य सर्वोऽपि गच्छः, आत्मना तु देशोनचत्वारिंशत्पूर्वलक्षाणि सर्वपर्यायं परिपाल्य तदन्तिके शैलेशीकरणकरवालेन मोहादिमहाबलस्य हतशेषं वेदनीयायुर्नामगोत्राख्यं भवोपग्राहिकर्मचतुष्टयं निहत्य निःशेषचारित्रधर्मसैन्यं सर्वमपि प्रकर्षवतीमुन्नतिं नीत्वा समस्तसंसारदुःखप्रपञ्चविप्रमुक्तः, सर्वशरीरकर्म्मसम्बन्धं विप्रहाय संजातो निर्वृत्तिपुरीपरमेश्वरो वलिमहानरेन्द्रर्षिकेवलिजीव इति ॥

वलिनरेन्द्राख्यानकं समाप्तम् । तत्समाप्तौ च प्रथमानित्यत्वभावना समाप्ता ।

